Madras & Andhra Universities.

# The Sanskrit Text Book

( FOR GROUP A. )

FOR

## The S. S. L. C. Public Examination

AND FOR

## The Matriculation Examination

1938



PRINTED BY

RAO BROTHERS (REGD.),

AT THE SARADA PRESS, MADRAS

1937

# CONTENTS

## POETRY



## PROSE



## NOTES

ओं

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

# श्रीमद्वाल्मीकिरामायणे आदिकाव्ये

# बालकाण्डे

# द्विचत्वारिंशः सर्गः

कालधर्मं गते राम सगरे प्रकृतीजनाः ।
राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १ ॥

स राजा सुमहानासीदंशुमान् रघुनन्दन ।
तस्य पुत्रो महानासीद् दिलीप इति विश्रुतः ॥ २ ॥

तस्मिन् राज्यं समावेश्य दिलीपे रघुनन्दन ।
हिमवच्छिखरे पुण्ये तपस्तेपे सुदारुणम् ॥ ३ ॥

द्वात्रिंशच्च सहस्राणि वर्षाणि सुमहायशाः ।
तपोवनं गतो राम स्वर्गं लेभे तपोधनः ॥ ४ ॥

दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम् ।
दुःखोपहतया बुद्ध्या निश्चयं नाध्यगच्छत ॥ ५ ॥

कथं गङ्गावतरणं कथं तेषां जलक्रिया ।
तारयेयं कथं चैनानिति चिन्तापरोऽभवत् ॥ ६ ॥

तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः ।
पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७ ॥

दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान् ।
त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ८ ॥

अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति ।
व्याधिना नरशार्दूल कालधर्ममुपेयिवान् ॥ ९ ॥

इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा ।
राज्ये भगीरथं पुत्रमभिषिच्य नरर्षभः ॥ १० ॥

भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन ।
अनपत्यो महातेजाः प्रजाकामः स चाप्रजाः ॥ ११ ॥

मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ।
स तपो दीर्घमातिष्ठद् गोकर्णे रघुनन्दन ॥ १२ ॥

तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ।
अतीतानि महाबाहो तस्य राज्ञो महात्मनः ॥ १३ ॥

ततः सुरगणैस्सार्धमुपगम्य पितामहः ।
भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥ १४ ॥

भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर ।
तपसा च सुतप्तेन वरं वरय सुव्रत ॥ १५ ॥

तमुवाच महातेजाः सर्वलोकपितामहम् ।
भगीरथो महाभागः कृताञ्जलिरुपस्थितः ॥ १६ ॥

यदि मे भगवन् प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ १७ ॥

गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥ १८ ॥

देया च सन्ततिर्देव नावसीदेत् कुलं च नः ।
इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ १९ ॥

उक्तवाक्यं तु राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥ २० ॥

मनोरथो महानेष भगीरथ महारथ ।
एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्धन ॥ २१ ॥

इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता ।
तां वै धारयितुं शक्तो हरस्तत्र नियुज्यताम् ॥ २२ ॥

गङ्गायाः पतनं राजन् पृथिवी न सहिष्यति ।
तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ॥ २३ ॥

तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् ।
जगाम त्रिदिवं देवः सह देवैर्मरुद्गणैः ॥ २४ ॥

इति द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

## त्रिचत्वारिंशः सर्गः

देवदेवे गते तस्मिन् सोऽङ्गुष्ठाग्रनिपीडिताम् ।
कृत्वा वसुमतीं राम संवत्सरमुपासत ॥ १ ॥

अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ॥ २ ॥

प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ३ ॥

ततो हैमवती ज्येष्ठा कृत्वा वेगं च दुःसहम् ।
आकाशादपतद्राम शिवे शिवशिरस्युत ॥ ४ ॥

अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ।
विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम् ॥ ५ ॥

तस्याऽवलेपनं ज्ञात्वा क्रुद्धस्तु भगवान् हरः ।
तिरोभावयितुं बुद्धिं चक्रे त्रिणयनस्तदा ॥ ६ ॥

सा तस्मिन् पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ।
हिमवत्प्रतिमे राम जटामण्डलगह्वरे ॥ ७ ॥

सा कथञ्चिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ।
नैव निर्गमनं लेभे जटामण्डलमोहिता ॥ ८ ॥

तामपश्यन् पुनस्तत्र तपः परममास्थितः ।
अनेन तोषितश्चाभूदत्यर्थं रघुनन्दन ॥ ९ ॥

विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ।
तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ॥ १० ॥

ह्लादिनी पावनी चैव नलिनी च तथा परा ।
तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ॥ ११ ॥

सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ।
तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ॥ १२ ॥

सप्तमी चान्वगात्तासां भगीरथमथो नृपम् ।
भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ॥ १३ ॥

आयादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ।
गगनाच्छङ्करशिरस्ततो धरणिमाश्रिता ॥ १४ ॥

व्यसर्पत जलं तत्र तीव्रशब्दपुरस्कृतम् ।
मत्स्यकच्छपसङ्घैश्च शिंशुमारगणैस्तदा ॥ १५ ॥

ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तदा ।
व्यलोकयन्त ते तत्र गगनाद्गां गतां तथा ॥ १६ ॥

विमानैर्नगराकारैर्हयैर्गजवरैस्तदा ।
पारिप्लवगतैश्चापि देवतास्तत्र विष्ठिताः ॥ १७ ॥

तदद्भुततमं लोके गङ्गापतनमुत्तमम् ।
दिदृक्षवो देवगणाः समीयुरमितौजसः ॥ १८ ॥

संपतद्भिः सुरगणैस्तेषां चाभरणौजसा ।
शतादित्यमिवाभाति गगनं गततोयदम् ॥ १९ ॥

शिंशुमारोरगगणैर्मीनैरपि च चञ्चलैः ।
विद्युद्भिरिव विक्षिप्तमाकाशमभवत्तदा ॥ २० ॥

पाण्डरैः सलिलोत्पीडैः कीर्यमाणैः सहस्रधा ।
शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः ॥ २१ ॥

क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् ।
विनतं क्वचिदुद्धूतं क्वचिद्याति शनैः शनैः ॥ २२ ॥

सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः ।
मुहुरूर्ध्वमुखं गत्वा पपात वसुधातलम् ॥ २३ ॥

तच्छङ्करशिरोभ्रष्टं भ्रष्टं भूमितले पुनः ।
व्यरोचत तदा तोयं निर्मलं गतकल्मषम् ॥ २४ ॥

तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ २५ ॥

शापात् प्रपतिता ये च गगनाद्वसुधातलम् ।
कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ २६ ॥

धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता ।
पुनराकाशमाविश्य स्वाँल्लोकान् प्रतिपेदिरे ॥ २७ ॥

मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ।
कृताभिषेको गङ्गायां बभूव विगतक्लमः ॥ २८ ॥

देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ २९ ॥

सर्वाश्चाप्सरसो राम भगीरथरथानुगाम् ।
गङ्गामन्वगमन् प्रीताः सर्वे जलचराश्च ये ॥ ३० ॥

यतो भगीरथो राजा ततो गङ्गा यशस्विनी ।
जगाम सरितां श्रेष्ठा सर्वपापविनाशिनी ॥ ३१ ॥

ततो हि यजमानस्य जह्नोरद्भुतकर्मणः ।
गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥ ३२ ॥

तस्याऽवलेपनं ज्ञात्वा क्रुद्धो यज्वा तु राघव ।
अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ॥ ३३ ॥

ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः ।
पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥ ३४ ॥

गङ्गां चापि नयन्ति स्म दुहितृत्वे महात्मनः ।
ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् पुनः ॥ ३५ ॥

तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ।
जगाम च पुनर्गङ्गा भगीरथरथानुगा ॥ ३६ ॥

सागरं चापि संप्राप्ता सा सरित्प्रवरा तदा ।
रसातलमुपागच्छत् सिद्ध्यर्थं तस्य कर्मणः ॥ ३७ ॥

भगीरथोऽपि राजर्षिर्गङ्गामादाय यत्नतः ।
पितामहान् भस्मकृतानपश्यद्दीनचेतनः ॥ ३८ ॥

अथ तद्भस्मनां राशिं गङ्गासलिलमुत्तमम् ।
प्लावयद्धूतपाप्मानः स्वर्गं प्राप्ता रघूत्तम ॥ ३९ ॥

इति त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

## चतुश्चत्वारिंशः सर्गः

स गत्वा सागरं राजा गङ्गयाऽनुगतस्तदा ।
प्रविवेश तलं भूमेर्यत्र ते भस्मसात् कृताः ॥ १ ॥

भस्मन्यथाप्लुते राम गङ्गायाः सलिलेन वै ।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २ ॥

तारिता नरशार्दूल दिवं याताश्च देववत् ।
षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३ ॥

सागरस्य जलं लोके यावत् स्थास्यति पार्थिव ।
सगरस्यात्मजास्तावत् स्वर्गे स्थास्यन्ति देववत् ॥ ४ ॥

इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति ।
त्वत्कृतेन च नाम्नाऽथ लोके स्थास्यति विश्रुता ॥ ५ ॥

गङ्गा त्रिपथगा राजन् दिव्या भागीरथीति च ।
त्रीन् पथो भावयन्तीति ततस्त्रिपथगा स्मृता ॥ ६ ॥

पितामहानां सर्वेषां त्वमत्र मनुजाधिप ।
कुरुष्व सलिलं राजन् प्रतिज्ञामपवर्जय ॥ ७ ॥

पूर्वकेण हि ते राजंस्तेनातियशसा तदा ।
धर्मिणां प्रवरेणापि नैष प्राप्तो मनोरथः ॥ ८ ॥

तथैवांशुमता तात लोकेऽप्रतिमतेजसा ।
गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ९ ॥

राजर्षिणा गुणवता महर्षिसमतेजसा ।
मत्तुल्यतपसा चैव क्षत्रधर्मस्थितेन च ॥ १० ॥

दिलीपेन महाभाग तव पित्राऽतितेजसा ।
पुनर्न शङ्किता नेतुं गङ्गां प्रार्थयताऽनघ ॥ ११ ॥

सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ ।
प्राप्तोऽसि परमं लोके यशः परमसंमतम् ॥ १२ ॥

यच्च गङ्गावतरणं त्वया कृतमरिन्दम ।
अनेन च भवान् प्राप्तो धर्मस्यायतनं महत् ॥ १३ ॥

प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते ।
सलिले पुरुषव्याघ्र शुचिः पुण्यफलो भव ॥ १४ ॥

पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् ।
स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप ॥ १५ ॥

इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः ।
यथागतं तथाऽगच्छद्देवलोकं महायशाः ॥ १६ ॥

भगीरथोऽपि राजर्षिः कृत्वा सलिलमुत्तमम् ।
यथाक्रमं यथान्यायं सागराणां महायशाः ॥ १७ ॥

कृतोदकः शुची राजा स्वपुरं प्रविवेश ह ।
समृद्धार्थो नरश्रेष्ठ स्वराज्यं प्रशशास ह ॥ १८ ॥

प्रमुमोद च लोकस्तं नृपमासाद्य राघव ।
नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ॥ १९ ॥

एष ते राम गङ्गाया विस्तरोऽभिहितो मया ।
स्वस्ति प्राप्नुहि भद्रं ते सन्ध्याकालोऽतिवर्तते ॥ २० ॥

इति चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥



श्रीः

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

# श्रीमन्महाभारते वनपर्वणि

## पञ्चत्रिंशोऽध्यायः

(पूर्वाध्यायकथासंग्रहः — अर्जुनेन हिमवच्छिखरे तपश्चरणम् । पार्थतपोभीरुभि महर्षिभिः प्रार्थितेन महादेवेनाश्वासनपूर्वकमृषीणां प्रतिनिवर्तनम् ॥

वैशम्पायनः—

गतेषु तेषु सर्वेषु तपस्विषु महात्मसु ।
पिनाकपाणिर्भगवान् सर्वपापहरो हरः ॥ १ ॥

कैरातं वेषमास्थाय काञ्चनद्रुमसन्निभम् ।
विभ्राजमानो वपुषा गिरिर्मेरुरिवापरः ॥ २ ॥

श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान् ।
निष्पपात महार्चिष्मान् दहनः कक्षवानिव ॥ ३ ॥

देव्या सहोमया श्रीमान् समानव्रतवेषया ।
नानावेषधरैर्हृष्टैर्भूतैरनुगतस्तथा ॥ ४ ॥

किरातवेषसञ्छन्नस्स्त्रीभिश्चानु सहस्रशः ।
अशोभत महाराज स देवोऽतीव भारत ॥ ५ ॥

क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा ।
नादः प्रस्रवणानां च पक्षिणामप्युपारमत् ॥ ६ ॥

स सन्निकर्षमागम्य पार्थस्याक्लिष्टकारिणः ।
मूकं नाम दितेः पुत्रं ददर्शाद्भुतविक्रमम् ॥ ७ ॥

वाराहं रूपमास्थाय तर्जयन्तमिवार्जुनम् ।
हन्तुं परमदुष्टात्मा तमुवाचाथ फल्गुनः ॥ ८ ॥

गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान् ।
सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन् ॥ ९ ॥

अर्जुनः —

यन्मां प्रार्थयसे हन्तुमनागसमिहागतम् ।
तस्मात्त्वां पूर्वमेवाहं नेष्यामि यमसादनम् ॥ १० ॥

वैशम्पायनः —

दृष्ट्वा तं प्रहरिष्यन्तं फल्गुनं दृढधन्विनम् ।
किरातरूपी सहसा वारयामास शङ्करः ॥ ११ ॥

मयैष प्रार्थितः पूर्वं नीलमेघसमप्रभः ।
अनादृत्यैव तद्वाक्यं प्रजहाराथ फल्गुनः ॥ १२ ॥

किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः ।
प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम् ॥ १३ ॥

तौ मुक्तौ सायकौ तत्र समवेगौ निपेततुः ।
मूकस्य गात्रे विस्तीर्णे शैलपृष्ठनिभे तदा ॥ १४ ॥

यथाऽशनेर्विनिष्पेषो वज्रस्येव च पर्वते ।
तथा तयोस्सन्निपातश्शरयोरभवत्तदा ॥ १५ ॥

स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव ।
ममार राक्षसं रूपं भयं कृत्वा सुदारुणम् ॥ १६ ॥

ददर्शाथ ततो जिष्णुः पुरुषं काञ्चनप्रभम् ।
किरातवेषप्रच्छन्नं स्त्रीसहायममित्रहा ॥ १७ ॥

तमब्रवीत् प्रीतमनाः कौन्तेयः प्रहसन्निव ॥ १७½ ॥

अर्जुनः —

को भवानटने शून्ये वने स्त्रीगणसंवृतः ।
न त्वमस्मिन् वने घोरे बिभेषि कनकप्रभ ॥ १८½ ॥

किमर्थं च त्वया विद्धो मृगोऽयं मत्परिग्रहः ।
मयाऽभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः ॥ १९½ ॥

कामात् परिभवाच्चापि न मे जीवन् विमोक्ष्यसे ॥ २० ॥

न ह्येष मृगयाधर्मो यस्त्वयाऽद्य कृतो मयि ।
तेन त्वां भ्रंशयिष्यामि जीवितात् पर्वताश्रयम् ॥ २१ ॥

वैशम्पायनः —

इत्युक्तः पाण्डवेयेन किरातः प्रहसन्निव ।
उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनम् ॥ २२ ॥

किरातः —

ममैवायं लक्षभूतः पूर्वमेव परिग्रहः ।
ममैव च प्रहारेण जीविताद्व्यपरोपितः ॥ २३ ॥

दोषान् स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः ।
अभियुक्तोऽस्मि मन्दात्मन्न मे जीवन् विमोक्ष्यसे ॥ २४

स्थिरो भव विमोक्ष्यामि सायकानशनीनिव ।
घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् ॥ २५ ॥

वैशम्पायनः —

ततस्तौ तत्र संरब्धौ गर्जमानौ मुहुर्मुहुः ।
शरैराशीविषाकारैस्ततक्षाते परस्परम् ॥ २६ ॥

ततोऽर्जुनः शरवर्षं किराते समवासृजत् ।
तत्प्रसन्नेन मनसा प्रतिजग्राह शङ्करः ॥ २७ ॥

मुहूर्तं शरवर्षं तु प्रतिगृह्य पिनाकधृक् ।
अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः ॥ २८ ॥

स दृष्ट्वा बाणवर्षं तु मोघीभूतं धनञ्जयः ।
परमं विस्मयं चक्रे साधु साध्विति चाब्रवीत् ॥ २९ ॥

अर्जुनः —

अहोऽयं सुकुमाराङ्गो हिमवच्छिखरालयः ।
गाण्डीवमुक्तान्नाराचान् प्रतिगृह्णात्यविह्वलः ॥ ३० ॥

कोऽयं देवो भवेत् साक्षाद्रुद्रो यक्षोऽसुरेश्वरः ।
विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः ॥ ३१ ॥

न हि मद्बाणजालानामुत्सृष्टानां सहस्रशः ।
शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम् ॥ ३२ ॥

देवो वा यदि वा यक्षो रुद्रादन्यो व्यवस्थितः ।
अहमेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ ३३ ॥

वैशम्पायनः —

ततो हृष्टमना जिष्णुर्नाराचान् मर्मभेदिनः ।
व्यसृजच्छतधा राजन् मयूखानिव भास्करः ॥ ३४ ॥

तान् प्रसन्नेन मनसा भगवाँल्लोकभावनः ।
शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः ॥ ३५ ॥

क्षणेन क्षीणबाणोऽथ संवृत्तः फल्गुनस्तदा ।
वित्रासं च जगामाथ तं दृष्ट्वा शरसंक्षयम् ॥ ३६ ॥

चिन्तयामास जिष्णुस्तु भगवन्तं हुताशनम् । ३६½ ॥

अर्जुनः —

पुरस्तादक्षयौ दत्तौ तूणौ मे येन खाण्डवे ।
किं नु मोक्ष्यामि धनुषा यन्मे बाणाः क्षयं गताः ॥ ३७½ ॥

अयं च पुरुषः कोऽपि बाणान् ग्रसति सर्वशः ॥ ३८ ॥

अहमेनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरम् ।
नयामि दण्डधारस्य यमस्य सदनं प्रति ॥ ३९ ॥

वैशम्पायनः —

सम्प्रयुद्धयन् धनुष्कोट्या कौन्तेयः परवीरहा ।
अतुलं देवमीशानं ललाटे प्रजहार च ॥ ४० ॥

तदप्यस्य धनुर्दिव्यं जग्राह गिरिगोचरः ॥ ४०½ ॥

ततोऽर्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत ।
युद्धस्यान्तमभीप्सन् वै वेगेनाभिजगाम तम् ॥ ४१½ ॥

तस्य मूर्ध्नि शितं खड्गमसक्तं पर्वतेष्वपि ।
मुमोच भुजवीर्येण विक्रम्य कुरुनन्दनः ॥ ४२½ ॥

तस्य मूर्धानमासाद्य पफालासिवरोऽथ सः ॥ ४३ ॥

ततो वृक्षैः शिलाभिश्च योधयामास फल्गुनः ।
यथा वृक्षान् महाकायः प्रत्यगृह्णादथो शिलाः ॥ ४४ ॥

किरातरूपी भगवांस्ततः पार्थो महाबलः ।
मुष्टिभिर्वज्रसंस्पर्शैर्धूममुत्पादयन् मुखे ॥ ४५ ॥

प्रजहार दुराधर्षे किरातसमरूपिणि । ४५½ ॥

ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः ।
किरातरूपी भगवानर्दयामास फल्गुनम् ॥ ४६½ ॥

ततश्चटचटाशब्दः सुघोरः समजायत ।
पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः ॥ ४७½ ॥

सुमुहूर्तं तयोर्युद्धमासील्लोकप्रहर्षणम् ।
भुजप्रहारसंयुक्तं वृत्रवासवयोरिव ॥ ४८½ ॥

महाराज ततो जिष्णुः किरातं तरसा बली ।
पाण्डवं च विचेष्टन्तं किरातोऽप्यहनद्बलात् ॥ ४९½ ॥

तयोर्भुजविनिष्पेषात् सङ्घर्षणोरसोस्तदा ।
समजायत गात्रेषु पावकोऽङ्गारधूमवान् ॥ ५०½ ॥

तत एनं महादेवः पीड्य गात्रैस्सुपीडितम् ।
तेजसाऽत्याक्रामद्रोषाच्चेतस्तस्य विमोहयन् ॥ ५१½ ॥

ततो निष्पीडितैर्गात्रैः पिण्डीकृत इवाबभौ ।
फल्गुनो गात्रसंरुद्धो देवदेवेन भारत ॥ ५२½ ॥

निरुच्छ्वासोऽभवच्चैव सन्निरुद्धो महात्मना ।
ततः पपात संमूढस्ततः प्रीतोऽभवद्धरः ॥ ५३½ ॥

मुमुहूर्तं ततो भूत्वा सचेताः पुनरुत्थितः ।
रुधिरेणाप्लुताङ्गस्तु पाण्डवो भृशदुःखितः ॥ ५४½ ॥

शरण्यं शरणं गत्वा भगवन्तं पिनाकिनम् ।
मृण्मयं स्थण्डिले कृत्वा माल्येनापूजयद्भवम् ॥ ५५½ ॥

तच्च माल्यं तदा पार्थः किरातशिरसि स्थितम् ।
अपश्यत् पाण्डवश्रेष्ठो हर्षेण प्रकृतिं गतः ॥ ५६ ॥

पपात पादयोस्तस्य ततः प्रीतोऽभवद्भवः ॥ ५७ ॥

श्रीमहेश्वरः —

भो भो फल्गुन तुष्टोऽस्मि कर्मणाऽप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥ ५८ ॥

समं तेजश्च वीर्यं च ममाद्य तव चानघ ।
प्रीतस्तेऽहं महाबाहो पश्य मां पुरुषर्षभ ॥ ५९ ॥

ददामि ते विशालाक्ष चक्षुः पूर्वं मुनिर्भवान् ।
विजेष्यसि रणे शत्रूनपि देवान् दिवौकसः ॥ ६० ॥

वैशम्पायनः —

ततो देवं महादेवं गिरिशं शूलपाणिनम् ।
ददर्श फल्गुनस्तत्र सह देव्या महाद्युतिम् ॥ ६१ ॥

स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च ।
प्रसादयामास हरं पार्थः परपुरञ्जयः ॥ ६२ ॥

अर्जुनः —

कपर्दिन् सर्वभूतेश भगनेत्रनिपातन ।
व्यतिक्रमं मे भगवन् क्षन्तुमर्हसि शङ्कर ॥ ६३ ॥

भगवद्दर्शनाकाङ्क्षी प्राप्तोऽस्मीमं महागिरिम् ।
दयितं तव देवेश तापसालयमुत्तमम् ॥ ६४ ॥

प्रसादये त्वां भगवन् सर्वलोकनमस्कृतम् ।
न मे स्यादपराधोऽयं महादेवातिसाहसात् ॥ ६५ ॥

कृतो मया यदज्ञानाद्विमर्दो यस्त्वया सह ।
शरणं मे प्रपन्नाय तत् क्षमस्वाद्य शङ्कर ॥ ६६ ॥

वैशम्पायनः —

तमुवाच महातेजाः प्रहस्य वृषभध्वजः ।
प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फल्गुनम् ॥ ६७ ॥

परिष्वज्य च बाहुभ्यां प्रीतात्मा भगवान् हरः ।
पुनः पार्थं सान्त्वपूर्वमुवाच वृषभध्वजः ॥ ६८ ॥

गङ्गाङ्कितजटः शर्वः पार्थस्यामिततेजसः ।
प्रगृह्य रुचिरं बाहुं वृत्तं ताम्रतलाङ्गुलिम् ॥ ६९ ॥

श्रीमहेश्वरः —

नरस्त्वं पूर्वदेहे वै नारायणसहायवान् ।
बदर्यां तप्तवानुग्रं तपो वर्षायुतान् बहून् ॥ ७० ॥

त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे ।
युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्यते जगत् ॥ ७१ ॥

शक्राभिषेके सुमहद्धनुर्जलदनिस्वनम् ।
प्रगृह्य दानवाः शस्तास्त्वया कृष्णेन च प्रभो ॥ ७२ ॥

एतत्तदेव गाण्डीवं तव पार्थ करोचितम् ।
मायामास्थाय यद्ग्रस्तं मया पुरुषसत्तम ॥ ७३ ॥

नृणां चाप्यक्षयौ भूयस्तव पार्थ यथोचितौ ।
भविष्यति शरीरं च नीरुजं कुरुनन्दन ॥ ७४ ॥

प्रीतिमानस्मि वै पार्थ तव सत्यपराक्रम ।
गृहाण वरमस्मत्तः काङ्क्षितं यन्नरर्षभ ॥ ७५ ॥

न त्वया सदृशः कश्चित् पुमान् मर्त्येषु भारत ।
दिवि वा विद्यते क्षत्रं त्वत्प्रधानमरिन्दम ॥ ७६ ॥

अर्जुनः —

भवान् ददाति चेन्मह्यं कामं प्रीत्या वृषध्वज ।
कामये दिव्यमस्त्रं तद्घोरं पाशुपतं प्रभो ॥ ७७ ॥

यत्तद्ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम् ।
युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ॥ ७८ ॥

जयेयं येन संग्रामे दानवान् राक्षसांस्तथा ।
राक्षश्चैव पिशाचांश्च गन्धर्वानथ पन्नगान् ॥ ७९ ॥

यस्मिन् शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः ।
शराश्चाशीविषाकाराः सम्भवन्त्यनुमन्त्रिताः ॥ ८० ॥

युध्येयं येन भीष्मेण द्रोणेन च कृपेण च ।
सूतपुत्रेण च रणे नित्यं कटुकभाषिणा ॥ ८१ ॥

एष मे प्रथमः कामो भगवन् भगनेत्रहन् ।
त्वत्प्रसादाद्विनिर्वृत्तः समर्थः स्यामहं यथा ॥ ८२ ॥

श्रीमहेश्वरः —

ददामि तेऽस्त्रं दयितमहं पाशुपतं महत् ।
समर्थो धारणे मोक्षे संहारे चासि पाण्डव ॥ ८३ ॥

न तद्वेद महेन्द्रोऽपि न यमो न च यक्षराट्।
वरुणो वाऽथवा वायुः कुतो वेत्स्यन्ति मानवाः ॥ ८४ ॥

न त्वया सहसा पार्थ मोक्तव्यं पुरुषे क्वचित्।
जगद्विनिर्दहेत् सर्वमल्पतेजसि पातितम् ॥ ८५ ॥

अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे।
मनसा चक्षुषा वाचा धनुषा च निपात्यते ॥ ८६ ॥

वैशम्पायनः —

तच्छ्रुत्वा सहसा पार्थः शुचिर्भूत्वा समाहितः।
उपसङ्गृह्य विश्वेशमधीष्वेति च सोऽब्रवीत् ॥ ८७ ॥

ततस्त्वध्यापयामास सरहस्यनिवर्तनम्।
तदस्त्रं पाण्डवश्रेष्ठं मूर्तिमन्तमिवान्तकम् ॥ ८८ ॥

उपतस्थे महात्मानं यथा त्र्यक्षमुमापतिम्।

प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा ॥ ८९ ॥

ततश्चचाल पृथिवी सपर्वतवनद्रुमा।
ससागरवनोद्देशा सग्रामनगराकरा ॥ ९० ॥

शङ्खदुन्दुभिघोषाश्च भेरीणां च सहस्रशः।
तस्मिन् मुहूर्ते संप्राप्ते निर्घातश्च महानभूत् ॥ ९१ ॥

अथास्त्रं जाज्वलद्घोरं पाण्डवस्यामितौजसः।
मूर्तिमद्विष्ठितं पार्श्वे ददृशुर्देवदानवाः ॥ ९२ ॥

स्पृष्टस्य च त्र्यम्बकेण फल्गुनस्यामितौजसः।
यत् किञ्चिदशुभं देहे तत् सर्वं नाशमीयिवत् ॥ ९३ ॥

स्वर्गं गच्छेत्यनुज्ञातस्त्र्यम्बकेण तथाऽर्जुनः ।
प्रणम्य शिरसा राजन् प्राञ्जलिर्हरमैक्षत ॥ ९४ ॥

ततः प्रभुस्त्रिदिवनिवासिनां वशी
महामतिर्गिरिश उमापतिः शिवः ।
धनुर्महद्दितिजपिशाचसूदनं
ददौ पुनः पुरुषवराय गाण्डिवम् ॥ ९५ ॥

ततः शुभं गिरिवरमीश्वरस्तदा
सहोमयाऽसिततटसानुकन्दरम् ।
विहाय तं पतगमहर्षिसेवितं
जगाम खं पुरुषवरस्य पश्यतः ॥ ९६ ॥

इति वनपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः

वैशम्पायनः—

पार्थस्य पश्यतश्चैव पिनाकी गोवृषध्वजः ।
जगामादर्शनं भानुर्लोकस्येवास्तमीयिवान् ॥ १ ॥

ततोऽर्जुनः परं चक्रे विस्मयं परवीरहा ।
मया साक्षान्महादेवो दृष्ट इत्यसकृत् प्रभुः ॥ २ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मया त्र्यम्बको हरः ।
पिनाकी वरदो रूपी दृष्टः स्पृष्टश्च पाणिना ॥ ३ ॥

कृतार्थं चावगच्छामि परमात्मानमात्मना ।
शत्रूंश्च विजितान् सर्वान्निर्वृत्तं च प्रयोजनम् ॥ ४ ॥

इत्येवं चिन्तयानस्य पार्थस्यामिततेजसः ।
ततो वैडूर्यवर्णाभो द्योतयन् सर्वतो दिशः ॥ ५ ॥

यादोगणवृतः श्रीमानाजगाम जलेश्वरः ।
नागैर्नदैर्नदीभिश्च दैत्यैः साध्यैर्मरुद्गणैः ॥ ६ ॥

वरुणो यादसां भर्ता वशी तं देशमागतम् ॥ ६½ ॥

अथ जाम्बूनदवपुर्विमानेन महार्चिषा ।
कुबेरः समनुप्राप्तो यक्षैरनुगतः प्रभुः ॥ ७½ ॥

विद्योतयन्निवाकाशमद्भुतोपमदर्शनः ।
धनानामधिपः श्रीमानर्जुनं द्रष्टुमागतः ॥ ८½ ॥

तथा लोकान्तकः श्रीमान् यमः साक्षात् प्रतापवान् ।
मर्त्यमूर्तिधरैः सार्धं पितृभिर्लोकपावनैः ॥ ९½ ॥

दण्डपाणिरचिन्त्यात्मा सर्वभूतविनाशकृत् ।
वैवस्वतो धर्मराजो विमानेनावभासयन् ॥ १०½ ॥

त्रीन् लोकान् गुह्यकांश्चैव गन्धर्वांश्च सपन्नगान् ।
द्वितीय इव मार्ताण्डो युगान्ते समुपस्थिते ॥ ११½ ॥

भानुमन्ति विचित्राणि शिखराणि महागिरेः ।
समास्थायार्जुनं तत्र ददृशुस्तपसाऽन्वितम् ॥ १२½ ॥

ततो मुहूर्ताद्भगवानैरावतशिरोगतः ।
आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः ॥ १३½ ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे नागराजस्थः सितमभ्रमिवास्थितः ॥ १४½ ॥

संस्तूयमानो गन्धर्वैर्ऋषिभिश्च तपोधनैः ।
शृङ्गं गिरेः समासाद्य तस्थौ सूर्य इवोदितः ॥ १५½ ॥

अथ मेघस्वनो धीमान् व्याजहार शुभां गिरम् ।
यमः परमधर्मज्ञो दक्षिणां दिशमास्थितः ॥ १६½ ॥

यमः —

अर्जुनार्जुन पश्यास्मान् लोकपालान् समागतान् ।
दृष्टिं ते वितरामोऽद्य भवानर्हो हि दर्शनम् ॥ १७½ ॥

पूर्वर्षिरमितात्मा त्वं नरो नाम महाबलः ।
नियोगाद्ब्रह्मणस्तात मर्त्यतां समुपागतः ॥ १८½ ॥

त्वया वसुषु संभूतो महावीर्यः पितामहः ।
क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम् ॥ १९½ ॥

दानवाश्च महावीर्या ये मनुष्यत्वमागताः ।
निवातकवचाश्चैव संसाध्याः कुरुनन्दन ॥ २०½ ॥

पितुर्ममांशो देवस्य सर्वलोकप्रतापिनः ।
कर्णः स सुमहावीर्यस्त्वया वध्यो धनञ्जय ॥ २१½ ॥

अंशाश्च क्षत्रतां प्राप्ता देवगन्धर्वरक्षसाम् ।
त्वया निपातिता युद्धे स्वकर्मफलनिर्जिताम् ॥ २२½ ॥

गतिं प्राप्स्यन्ति कौन्तेय यथास्वमरिकर्शन ॥ २३ ॥

अक्षया तव कीर्तिश्च लोके स्थास्यति फल्गुन ।
त्वया साक्षान्महादेवस्तोषितो हि महामृधे ॥ २४ ॥

लघ्वी वसुमती चापि कर्तव्या विष्णुना सह ॥ २४½ ॥

गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणम् ।
अनेनास्त्रेण सुमहत्त्वं हि कर्म करिष्यसि ॥ २५½ ॥

वैशम्पायनः—

प्रतिजग्राह तत्पार्थो विधिवत् कुरुनन्दनः।
समन्त्रं सोपहारं च समोक्षं संनिवर्तनम्॥ २६½ ॥

ततो जलधरश्यामो वरुणो यादसां पतिः।
पश्चिमां दिशमास्थाय गिरमुच्चारयन् प्रभुः॥ २७½ ॥

वरुणः—

पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्मे व्यवस्थितः।
पश्य मां पृथुताम्राक्ष वरुणोऽस्मि जलेश्वरः॥ २८½ ॥

मया समुद्यतान् पाशान् वारुणानतिदारुणान्।
प्रतिगृह्णीष्व कौन्तेय सरहस्यनिवर्तनान्॥ २९½ ॥

एभिस्तदा मया वीर संग्रामे तारकामये।
दैतेयानां सहस्राणि संयतानि महात्मनाम्॥ ३०½ ॥

तस्मादिमान् महासत्त्व मत्प्रसादसमुत्थितान्।
गृहाण न हि ते मुच्येदन्तकोऽप्याततायिनः॥ ३१½ ॥

अनेन त्वं यदाऽस्त्रेण संग्रामे विचरिष्यसि।
तदा निःक्षत्रिया भूमिर्भविष्यति न संशयः॥ ३२½ ॥

वैशम्पायनः—

ततस्तान् वारुणान् दिव्यानस्त्रानस्त्रविदां वरः।
प्रतिजग्राह विधिवद्वरुणाद्वासविस्तदा॥ ३३½ ॥

ततः कैलासनिलयो धनाध्यक्षोऽभ्यभाषत।
दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च॥ ३४½ ॥

कुबेरः —

सव्यसाचिन् महाबाहो पूर्वदेव सनातन।
सहास्माभिर्भवान् श्रान्तः पुराकल्पेषु नित्यशः॥ ३५ $\frac{1}{2}$ ॥

मत्तोऽपि त्वं गृहाणास्त्रमन्तर्धानं प्रियं मम।
ओजस्तेजोद्युतिकरं प्रस्वापनमथारिहन्॥ ३६ $\frac{1}{2}$ ॥

वैशम्पायनः —

ततोऽर्जुनो महाबाहुर्विधिवत् कुरुनन्दनः।
कौबेरमपि जग्राह दिव्यमस्त्रं महाबलः॥ ३७ $\frac{1}{2}$ ॥

ततोऽब्रवीद्देवराजः पार्थमक्लिष्टकारिणम्।
सान्त्वयन् श्लक्ष्णया वाचा दिव्यदुन्दुभिनिःस्वनः॥ ३८ $\frac{1}{2}$ ॥

इन्द्रः —

कुन्तीपुत्र महाबाहो त्वमीशानः पुरातनः।
परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिं गतः॥ ३९ $\frac{1}{2}$ ॥

देवकार्यं हि सुमहत् त्वया कार्यमरिन्दम।
आरोढव्यस्त्वया स्वर्गः सज्जीभव महाद्युते॥ ४० $\frac{1}{2}$ ॥

रथो मातलिसंयुक्त आगतस्त्वत्कृते मम।
तत्र तेऽहं प्रदास्यामि सर्वाण्यस्त्राणि कौरव॥ ४१ $\frac{1}{2}$ ॥

वैशम्पायनः —

तान् दृष्ट्वा लोकपालांस्तु समेतान् गिरिमूर्धनि।
जगाम विस्मयं धीमान् कुन्तीपुत्रो धनञ्जयः॥ ४२ $\frac{1}{2}$ ॥

ततोऽर्जुनो महाराज लोकपालान् समागतान्।
पूजयामास विधिवद्वाग्भिरद्भिः फलैरपि॥ ४३ $\frac{1}{2}$ ॥

ततः प्रतिययुर्देवाः प्रतिपूज्य धनञ्जयम् ।
यथागतेन विबुधाः सर्वे कामं मनोजवाः ॥ ४४½ ॥

ततोऽर्जुनो मुदं लेभे लब्धास्त्रः पुरुषर्षभः ।
कृतार्थ इति चात्मानं स मेने पूर्णमानसम् ॥ ४५½ ॥

इति वनपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

ओं

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

---

## महाकविश्रीकालिदासकृते

# रघुवंशे

## द्वितीयः सर्गः

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

तस्याः खुरन्यासपवित्रपांसु -
मपांसुलानां धुरि कीर्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥

निवर्त्य राजा दयितां दयालु -
स्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां
जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

व्रताय तेनानुचरेण धेनो -—
र्न्यषेधि शेषोऽप्यनुयायिवर्गः ।

न चान्यतस्तस्य शरीररक्षा
स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥

आस्वादवद्भिः कवलैस्तृणानां
कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैश्च तस्याः
सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥

स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥

स न्यस्तचिह्नामपि राज्यलक्ष्मीं
तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृतदानराजि-
रन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥

लताप्रतानोद्ग्रथितैः सकेशै-
रधिज्यधन्वा विचचार दावम् ।
रक्षापदेशान्मुनिहोमधेनो-
र्वन्यान् विनेष्यन्निव दुष्टसत्त्वान् ॥ ८ ॥

विसृष्टपार्श्वानुचरस्य तस्य
पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदाना-
मालोकशब्दं वयसां विरावैः ॥ ९ ॥

मरुत्प्रयुक्ताश्च मरुत्सखाभं
तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन् बाललताः प्रसूनै-
राचारलाजैरिव पौरकन्याः ॥ १० ॥

धनुर्भृतोऽप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां
प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

स कीचकैर्मारुतपूर्णरन्ध्रैः
कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चै-
रुद्गीयमानं वनदेवताभिः ॥ १२ ॥

पृक्तस्तुषारैर्गिरिनिर्झराणा-
मनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्र-
माचारपूतं पवनः सिषेवे ॥ १३ ॥

शशाम वृष्ट्याऽपि विना दवाग्नि-
रासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे
तस्मिन् वनं गोप्तरि गाहमाने ॥ १४ ॥

सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम् ।

प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५ ॥

तां देवतापित्रतिथिक्रियार्था -
मन्वग् ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन
श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥

स पल्वलोत्तीर्णवराहयूथा -
न्यावासवृक्षोन्मुखबर्हिणानि ।
ययौ मृगाध्यासितशाद्वलानि
श्यामायमानानि वनानि पश्यन् ॥ १७ ॥

आपीनभारोद्वहनप्रयत्नाद्
गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।
उभावलंचक्रतुरञ्चिताभ्यां
तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥

वसिष्ठधेनोरनुयायिनं त-
मावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्ति-
रुपोषिताभ्यामिव लोचनाभ्याम् ॥ १९ ॥

पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिवधर्मपत्न्या ।
तदन्तरे सा विरराज धेनु-
र्दिनक्षपामध्यगतेव सन्ध्या ॥ २० ॥

प्रदक्षिणीकृत्य पयस्विनीं तां
सुदक्षिणा साक्षतपात्रहस्ता ।
प्रणम्य चानर्च विशालमस्याः
शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥ २१ ॥

वत्सोत्सुकाऽपि स्तिमिता सपर्यां
प्रत्यग्रहीत् सेति ननन्दतुस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां
प्रसादचिह्नानि पुरःफलानि ॥ २२ ॥

गुरोः सदारस्य निपीड्य पादौ
समाप्य सान्ध्यं च विधिं दिलीपः ।
दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥ २३ ॥

तामन्तिकन्यस्तबलिप्रदीपा-
मन्वास्य गोप्ता गृहिणीसहायः ।
क्रमेण सुप्तामनुसंविवेश
सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥

इत्थं व्रतं धारयतः प्रजार्थं
समं महिष्या महनीयकीर्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य
दिनानि दीनोद्धरणोचितस्य ॥ २५ ॥

अन्येद्युरात्मानुचरस्य भावं
जिज्ञासमाना मुनिहोमधेनुः ।

गङ्गाप्रपातान्तविरूढशष्पं
गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥

सा दुष्प्रधर्षा मनसाऽपि हिंस्रै-
रित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण
प्रसह्य सिंहः किल तां चकर्ष ॥ २७ ॥

तदीयमाक्रन्दितमार्तसाधो-
र्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां
निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥

स पाटलायां गवि तस्थिवांसं
धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां
लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥ २९ ॥

ततो मृगेन्द्रस्य मृगेन्द्रगामी
वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गा-
दुद्धर्तुमैच्छत् प्रसभोद्धृतारिः ॥ ३० ॥

वामेतरस्तस्य करः प्रहर्तु-
र्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव
चित्रार्पितारम्भ इवावतस्थे ॥ ३१ ॥

बाहुप्रतिष्टम्भविवृद्धमन्यु-
रभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्त-
र्भोगीव मन्त्रौषधरुद्धवीर्यः ॥ ३२ ॥

तमार्यगृह्यं निगृहीतधेनु-
र्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ
सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥

अलं महीपाल तव श्रमेण
प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्छति मारुतस्य ॥ ३४ ॥

कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्तेः
कुम्भोदरं नाम निकुम्भतुल्यम् ॥ ३५ ॥

अमुं पुरः पश्यसि देवदारुं
पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां
स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६ ॥

कण्डूयमानेन कटं कदाचिद्
वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच
सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥

तदा प्रभृत्येव वनद्विपानां
त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय
सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८ ॥

तस्यालमेषा क्षुधितस्य तृप्त्यै
प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे
सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥

स त्वं निवर्तस्व विहाय लज्जां
गुरोर्भवान् दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं
न तद्यशः शस्त्रभृतां क्षिणोति ॥ ४० ॥

इति प्रगल्भं पुरुषाधिराजो
मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावा-
दात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥

प्रत्यब्रवीच्चैनमिषुप्रयोगे
तत्पूर्वसङ्गे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन
वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥

संरुद्धचेष्टस्य मृगेन्द्र कामं
हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद
सर्वं भवान् भावमतोऽभिधास्ये ॥ ४३ ॥

मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्ने-
र्नश्यत् पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं
देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा
विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥

अथान्धकारं गिरिगह्वराणां
दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती
किञ्चिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥

एकातपत्रं जगतः प्रभुत्वं
नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्
विचारमूढः प्रतिभासि मे त्वम् ॥ ४७ ॥

भूतानुकम्पा तव चेदियं गौ-
रेका भवेत् स्वस्तिमती त्वदन्ते ।
जीवन् पुनः शश्वदुपप्लवेभ्यः
प्रजाः प्रजानाथ पितेव पासि ॥ ४८ ॥

अथैकधेनोरपराधचण्डाद्
गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं
गाः कोटिशः स्पर्शयता घटोध्नीः ॥ ४९ ॥

तद्रक्ष कल्याणपरम्पराणां
भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्न-
मृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ ५० ॥

एतावदुक्त्वा विरते मृगेन्द्रे
प्रतिस्वनेनास्य गुहागतेन ।
शिलोच्चयोऽपि क्षितिपालमुच्चैः
प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥

निशम्य देवानुचरस्य वाचं
मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या
निरीक्ष्यमाणः सुतरां दयालुः ॥ ५२ ॥

क्षतात् किल त्रायत इत्युदग्रः
क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः
प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥

कथं नु शक्योऽनुनयो महर्षे-
र्विश्राणनादन्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि
रुद्रौजसा तु प्रहृतं त्वयाऽस्याम् ॥ ५४ ॥

सेयं स्वदेहार्पणनिष्क्रयेण
न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं
भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५ ॥

भवानपीदं परवानवैति
महान् हि यत्नस्तव देवदारौ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे
विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६ ॥

किमप्यहिंस्यस्तव चेन्मतोऽहं
यशश्शरीरे भव मे दयालुः।
एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ॥ ५७ ॥

संबन्धमाभाषणपूर्वमाहु-
र्वृत्तस्स नौ सङ्गतयोर्वनान्ते।
तद्भूतनाथानुग नार्हसि त्वं
संबन्धिनो मे प्रणयं विहन्तुम् ॥ ५८ ॥

तथेति गामुक्तवते दिलीपः
सद्यः प्रतिष्टम्भविमुक्तबाहुः।
संन्यस्तशस्त्रो हरये स्वदेह-
मुपानयत् पिण्डमिवामिषस्य ॥ ५९ ॥

तस्मिन् क्षणे पालयितुः प्रजाना-
मुत्पश्यतः सिंहनिपातमुग्रम्।
अवाङ्मुखस्योपरि पुष्पवृष्टिः
पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

उत्तिष्ठ वत्सेत्यमृतायमानं
वचो निशम्योत्थितमुत्थितः सन्।
ददर्श राजा जननीमिव स्वां
गामग्रतः प्रस्रवणीं न सिंहम् ॥ ६१ ॥

तं विस्मितं धेनुरुवाच साधो
मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि
प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥ ६२ ॥

भक्त्या गुरौ मय्यनुकम्पया च
प्रीताऽस्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूति-
मवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥

ततः समानीय स मानितार्थी
हस्तौ स्वहस्तार्जितवीरशब्दः ।
वंशस्य कर्तारमनन्तकीर्तिं
सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥

सन्तानकामाय तथेति कामं
राज्ञे प्रतिश्रुत्य पयस्विनी सा ।
दुग्ध्वा पयः पत्रपुटे मदीयं
पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥

वत्सस्य होमार्थविधेश्च शेषं
गुरोरनुज्ञामधिगम्य मातः ।
ऊधस्यमिच्छामि तवोपभोक्तुं
षष्ठांशमुर्व्या इव रक्षितायाः ॥ ६६ ॥

इत्थं क्षितीशेन वसिष्ठधेनु-
र्विज्ञापिता प्रीततरा बभूव ।
तदन्विता हैमवताच्च कुक्षेः
प्रत्याययावाश्रममश्रमेण ॥ ६७ ॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं
गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै
शशंस वाचा पुनरुक्तमेव ॥ ६८ ॥

स नन्दिनीस्तन्यमनिन्दितात्मा
सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वसिष्ठेन कृताभ्यनुज्ञः
शुभ्रं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥

प्रातर्यथोक्तव्रतपारणान्ते
प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं
प्रस्थापयामास वशी वसिष्ठः ॥ ७० ॥

प्रदक्षिणीकृत्य हुतं हुताश -
मनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे
सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥

श्रोत्राभिरामध्वनिना रथेन
सधर्मपत्नीसहितस्सहिष्णुः ।
ययावनुद्घातसुखेन मार्गं
स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥

तमाहितौत्सुक्यमदर्शनेन
प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भि-
र्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥

पुरन्दरश्रीः पुरमुत्पताकं
  प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजङ्गेन्द्रसमानसारे
  भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥

इति रघुवंशे द्वितीयः सर्गः ॥ २ ॥

---

श्रीः

# सुभाषितानि

---

[N. B:—All the following 43 verses should be committed to memory.]

## कालिदासः

समुद्रपत्न्योर्जलसंनिपाते पूतात्मनामत्र किलाभिषेकात् ।
तत्त्वावबोधेन विनाऽपि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥१॥

जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ २ ॥

न त्वात्मानं बहु विगणयन्नात्मना नावलम्बे
तत् कल्याणि त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ३ ॥

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ ४ ॥

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ ५ ॥

## भवभूतिः

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति हि पुनर्भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥ ६ ॥

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ ७ ॥

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ८ ॥

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ ९ ॥

संगमः कर्मणां भेदाद् यदि न स्यान्न नाम सः ।
प्राणानां तु परित्यागे संतापोपशमः फलम् ॥ १० ॥

## विशाखदत्तः

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते
मूर्खान् द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि

शृङ्गेभ्योऽभ्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीलेलब्धप्रसंगेव वेशवनिता दुःखोपचर्या भृशम् ॥११॥

स्तुवन्ति श्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः
प्रवाचः कार्पण्याद्यदवितथवाचोऽपि पुरुषाः ।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा
निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥१२॥

किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन् कृपणवच्छलाघ्यो जनो लज्जते
निर्व्यूढं प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥१३॥

---

## मनुस्मृतिः

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यते ॥१४॥

परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥१५॥

योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते ।
स पापकृत्तमो लोके तेन ह्यात्मापहारकः ॥ १६ ॥

यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रापवादेन दानं च परिकीर्तनात् ॥ १७ ॥

## कुलशेखरः

चेतश्चिन्तय कीर्तयस्व रसने नम्रीभव त्वं शिरो
हस्तावञ्जलिसंपुटं रचयतं वन्दस्व दीर्घं वपुः ।

आत्मन् संश्रय पुण्डरीकनयनं नागाचलेन्द्रस्थितं
धन्यं पुण्यतमं तदेव परमं दैवं हि संसिद्धये ॥ १८ ॥

कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमध्वं सदा
कृष्णेनाखिलशत्रवो विनिहताः कृष्णाय तस्मै नमः ।
कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं
कृष्णे तिष्ठति विश्वमेतदखिलं हे कृष्ण रक्षस्व माम् ॥१९॥

## श्रीवेदान्तदेशिकः

मत्वा तृणाय भरतो मणिपादरक्षे
रामेण तां विरहितां रघुराजधानीम् ।
त्वामेव सप्रणयमुज्जयिनीमवन्त
मेने महोदयमयीं मधुरामयोध्याम् ॥ २० ॥

रामे वनं व्रजति पङ्क्तिरथे प्रमुप्ते
राज्यापवादचकिते भरते तदानीम् ।
आश्वासयेत् क इव कोसलवासिनस्तान्
मौनेव चेत् त्वमपि सोहमवृत्तिरासीः ॥ २१ ॥

पादावनि प्रभुतरानपराधवर्गान्
सोढुं क्षमा त्वमसि मूर्तिमती क्षमेव ।
यत् त्वां विहाय निहताः परिपन्थिनस्ते
देवेन दाशरथिना दशकण्ठमुख्याः ॥ २२ ॥

वर्षाणि तानि वृषलो न तपांसि तेपे
बालो न कश्चिदपि मृत्युवशं जगाम ।
राज्ये तवैव रघुपुङ्गवपादरक्षे
नैवापरं प्रतिविधेयमभूत् प्रसक्तम् ॥ २३ ॥

## भर्तृहरिः

दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम् ।
शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥२४ ॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्संगतिः कथय किं न करोति पुंसाम् ॥ २५ ॥

जातिर्यातु रसातलं गुणगणस्तत्राप्यधो गच्छता-
च्छीलं शैलटात् पतत्वभिजनः सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ २६ ॥

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमुपैति पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-
र्विनाऽप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ २८ ॥

पद्माकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते विहिताभियोगाः ॥ २९ ॥

रत्नैर्महाब्धेस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः॥३०॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ३१ ॥

## श्रीमदप्पय्यदीक्षितः

शीतांशुकोटिसुषमाशिशिरैः कटाक्षै-
रव्याजभूतकरुणारसपूरपूर्णैः ।
कर्पूरधूलिमिव दिक्षु समाकिरद्भि-
रम्ब क्षणं स्नपय मामरुणाद्रिमान्ये ॥ ३२ ॥

कण्ठे विषं विषमुचो भुजगाः कपर्दे
पार्श्वे च भूतपतयः प्रमथाश्च भीमाः ।
शोणाचलेशमुपसृत्य भजेत को वा
न स्यात् तवाम्ब सविधे यदि सन्निधानम् ॥ ३३

---

## श्रीनीलकण्ठदीक्षितः

त्रातव्य एष इति चेत् करुणा मयि स्यात्
त्रायस्व किं सुकृतदुष्कृतचिन्तया मे ।
कर्तुं जगत्तिरयितुं च विशृङ्खलायाः
कर्मानुरोध इति कं प्रति वञ्चनेयम् ॥ ३४ ॥

प्रामाण्यबुद्धिः स्तोत्रेषु देवताबुद्धिरात्मनि ।
कीटबुद्धिर्मनुष्येषु नूतनायाः श्रियः फलम् ॥ ३५

छायावृक्षमुपाश्रयन्ति पथिषु श्रान्ता हि पान्थाः समं
तेष्वेकोऽस्य शुभं शुभेन मनसा हृष्यन्ननुध्यायति ।
अन्यो हर्तुमपेक्षतेऽस्य विटपानाधारयष्टेः कृते
कश्चिन्निश्चनुते कवाटफलकं कर्तुं तमेव क्षणात् ॥ ३६

पर्याकुले मनसि वाचि परिस्खलन्त्या-
मावर्तगर्त इव चक्षुषि घूर्णमाने ।
कस्तेऽभिधास्यति शिवे मम तामवस्थां
काले दयस्व कथयामि तवाधुनैव ॥ ३७ ॥

## श्रीशङ्करभगवत्पादाः

गुहायां गेहे वा बहिरपि वने वाऽद्रिशिखरे
जले वा वह्नौ वा वसतु वसतेः किं वद फलम् ।
सदा यस्यैवान्तःकरणमपि शम्भो तव पदे
स्थितं चेद्योगोऽसौ स च परमयोगी स च सुखी ॥३८॥

सारूप्यं तव पूजने शिव महादेवेति सङ्कीर्तने
सामीप्यं शिवभक्तिधुर्यजनतासाङ्गत्यसंभाषणे ।
सालोक्यं च चराचरात्मकतनुध्याने भवानीपते
सायुज्यं मम सिद्धमत्र भवति स्वामिन् कृतार्थोऽस्म्यहम्॥३९॥

## श्रीमद्रामायणे अथागमस्य पन्थाः

यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् ।
नाहं तत् प्रतिगृह्णीयां भक्षान् विषकृतानिव ॥ ४० ॥

धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण ।
इच्छामि भवतामर्थ एतत् प्रतिशृणोमि ते ॥ ४१ ॥

भ्रातॄणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण ।
राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥ ४२ ॥

नेयं मम मही सौम्य दुर्लभा सागराम्बरा ।
न हीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण ॥ ४३ ॥



# कादम्बरी

## I

## अनपत्यताशोकः

---

अस्ति सकलत्रिभुवनललामभूता रसातलगम्भीरेण जलपरिखावलयेन परिवृता, सुधासितेन प्राकारमण्डलेन परिगता, महाविपणिपथैरुपशोभिता, सुरासुरसिद्धगन्धर्वविद्याधरोरगाध्यासिताभिश्चित्रशालाभिरलंकृता, कनकमयामलकलशशिखरैः विराजितशृङ्गाटका, स्फुरदुपवनलताकुसुमपरिमलसुरभिसमीरणा, सततप्रवृत्ताध्ययनध्वनिधौतकल्मषा, सहस्रसंख्यैरुद्भासिता सरोभिः, सिप्रया परिक्षिप्ता, विजितामरलोकद्युतिरवन्तीषूज्जयिनी नाम नगरी।

तस्यां नगर्यां नलनहुषययातिप्रतिमः भुजबलार्जितभूमण्डलः, ग्रहगण इव बुधानुगतः, दशरथ इव सुमित्रोपेतः, अवतार इव धर्मस्य, प्रतिनिधिरिव पुरुषोत्तमस्य, परिहृतप्रजापीडो राजा तारापीडो नामाभूत्।

तस्य च राज्ञो निखिलशास्त्रकलाविचक्षणः आशैशवादुपारूढनिर्भरप्रेमरसो नीतिशास्त्रप्रयोगकुशलो भुवनराज्यभारनौकर्णधारो महत्स्वपि कार्यसंकटेष्वविषण्णधीः, धाम धैर्यस्य, स्थानं स्थितेः, सेतुः सत्यस्य, गुरुर्गुणानाम्, आचार्य आचाराणां, धाता धर्मस्य, बृहस्पतिरिव सुनासीरस्य, कविरिव वृषपर्वणः, वसिष्ठ इव दशरथस्य, विश्वामित्र इव रामस्य, धौम्य इवाजातशत्रोः, दमनक इव नलस्य, सर्वकार्येष्वाहितमतिरमात्यो ब्राह्मणः शुकनासो नामासीत् ।

स राजा बाल एव निखिलारातिकुलप्रलयधूमकेतुदण्डेन बाहुना विजित्य सप्तद्वीपवलयां वसुंधरां तस्मिन् शुकनासनाम्नि मन्त्रिणि

सुहृदीव राज्यभारमारोप्य सुस्थिताः प्रजाः कृत्वा कर्तव्यशेषमपश्यन् प्रशमिताशेषविपक्षतया विगताशङ्कः शिथिलितपृथिवीव्यापारः प्रायो यौवनसुखान्यनुबभूव। प्रजानुरागहेतोश्चान्तरान्तरा दर्शनं ददौ, सिंहासनं च निमित्तेष्वारुरोह। शुकनासोऽपि महान्तं तं राज्यभारमनायासेनैव प्रज्ञाबलेन बभार। एवं तस्य राज्ञो मन्त्रिविनिवेशितराज्यभारस्य यौवनसुखमनुभवतः कालो जगाम।

भूयसा च कालेन अन्येषामपि जीवलोकसुखानां प्रायः सर्वेषामन्तं ययौ।

एकं तु सुतमुखदर्शनसुखं न लेभे। यथा यथा च यौवनमतिचक्राम तथा तथा विफलमनोरथस्यानपत्यताजन्मावर्धतास्य संतापः। नरपतिसहस्रपरिवृतमप्यसहायमिव चक्षुष्मन्तमप्यन्धमिव भुवनालम्बनमपि निरालम्बनमिवात्मानममन्यत।

अथ तस्य चन्द्रलेखेव हरजटाकलापस्य कौस्तुभप्रभेव कैटभारातिवक्षःस्थलस्य वनमालेव मुसलायुधस्य वेलेव सागरस्य लतेव पादपस्य चन्द्रिकेव चन्द्रमसः कमलिनीव सरसः चन्दनवनराजिरिव मलयस्य फणामणिशिखेव शेषस्य भूषणमभूत् त्रिभुवनविस्मयजननी सकलान्तःपुरप्रधानभूता महिषी विलासवती नाम।

एकदा च स तदावासगतस्तां चिन्तास्तिमितदृष्टिना शोकमूकेन परिजनेन परिवृतां करतलविनिहितमुखकमलां असंयताकुलालकां रुदतीं ददर्श। कृतप्रत्युत्थानां च तामविज्ञातबाष्पकारणो भीतभीत इव भूपालस्तामवादीत्—"देवि, किमर्थमशब्दं रुद्यते? किमर्थं च कृशोदरि नालंकृतासि? प्रसीद, निवेदय दुःखनिमित्तम्। कच्चिन्मयापराद्धमन्येन वा केनचिदस्मदुपजीविना परिजनेन? अतिनिपुणमपि

चिन्तयन्न पश्यामि खलु स्खलितमल्पमप्यात्मनस्त्वद्विषये। त्वदायत्तं हि मे जीवितं च राज्यं च। कथ्यतां सुन्दरि, शुचः कारणम्" इति। एवमभिधीयमाना विलासवती यदा न किंचित्प्रतिवचः प्रतिपेदे तदा विवृद्धबाष्पहेतुमस्याः परिजनमपृच्छत्।

अथ तस्यास्ताम्बूलकरङ्कवाहिनी सततप्रत्यासन्ना मकरिका नाम राजानमुवाच— "अभिमुखे च देवे का शक्तिः परिजनस्यान्यस्य वा कस्यचिदपराद्धुम्। अद्य तु चतुर्दशीति भगवन्तं महाकालमर्चितुमितो गतया तत्र महाभारते वाच्यमाने श्रुतम्— 'अपुत्राणां किल न सन्ति लोकाः शुभाः, पुन्नाम्नो नरकात् त्रायत इति पुत्रः' इति। एतच्छ्रुत्वा भवनमागत्य परिजनेन सशिरःप्रणाममभ्यर्थ्यमानापि नाहारमभिनन्दति न भूषणपरिग्रहमाचरति नोत्तरं प्रतिपद्यते, केवलं रोदिति। एतदाकर्ण्य देवः प्रमाणम्" इत्यभिधाय विरराम।

विरतवचनायां तस्यां भूमिपालस्तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निश्वस्य निजगाद— "देवि, किमत्र क्रियतां दैवायत्ते वस्तुनि। अतिमात्रमलं रुदितेन। न वयमनुग्राह्याः प्रायो देवतानाम्। आत्मजपरिष्वङ्गामृतास्वादसुखस्य नूनमभाजनमस्माकं हृदयम्। अन्यस्मिन् जन्मनि न कृतमवदातं कर्म। जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि। न हि शक्यं दैवमन्यथाकर्तुमभियुक्तेनापि। यावन्मानुष्यके शक्यमुपपादयितुं तावत्सर्वमुपपाद्यताम्। अधिकां कुरु देवि, गुरुषु भक्तिम्। द्विगुणामुपपादय देवतासु पूजाम्। ऋषिजनसपर्यासु दर्शितादरा भव। परं हि दैवतमृषयो यत्नेनाराधिता यथासमीहितफलानामतिदुर्लभानामपि वराणां दातारो भवन्ति। श्रूयते हि पुरा चण्डकौशिकप्रभावान्मगधेषु बृहद्रथो नाम राजा जनार्दनस्य जेतारमतुलभुजबलमप्रतिरथं जरासंधं नाम तनयं लेभे। दशरथश्च राजा परिणतवया विभण्डकमहामुनिसुतस्यर्ष्यश्रृङ्गस्य प्रसादान्नारायणभुजा-

निवाप्रतिहतानुदधीनिवाक्षोभ्यानवाप चतुरः पुत्रान्। अन्ये च राजर्षयस्तपोधनानाराध्य पुत्रदर्शनामृतास्वादसुखभाजो बभूवुः। अमोघफला हि महामुनिसेवा भवति। ममापि दहत्येवायमहर्निशमनल इवानपत्यताशोकः। शून्यमिव मे प्रतिभाति जगत्। अफलमिव पश्यामि राज्यम्। अप्रतिविधेये तु विधातरि किं करोमि? तन्मुच्यतामयं देवि, शोकानुबन्धः। आधीयतां धैर्ये धर्मे च धीः। धर्मपरायणानां हि सदा समीपसंचारिण्यः कल्याणसंपदो भवन्ति" इति। एवमभिधाय पुनः पुनश्च प्रियशतमधुराभिः शोकापनोदनिपुणाभिर्वाग्भिराश्वास्य सुचिरं स्थित्वा नरेन्द्रो निर्जगाम।

निर्गते च तस्मिन् मन्दीभूतशोका विलासवती यथाक्रियमाणाभरणपरिग्रहादिकमुचितं दिवसव्यापारमन्वतिष्ठत्। ततः प्रभृति सुतरां देवताराधनेषु ब्राह्मणपूजासु गुरुजनसपर्यासु चादरवती बभूव। यच्च किंचित्कुतश्चिच्छुश्राव गर्भतृष्णया तत्तत्सर्वं चकार। न महान्तमपि क्लेशमजीगणत्। प्रतिदिवसमुत्थायोत्थाय सर्वरत्नोपेतानि हैमानि तिलपात्राणि ब्राह्मणेभ्यो ददौ। प्रसिद्धेषु नागकुलह्रदेषु ममज्ज। अश्वत्थप्रभृतीनुपपादितपूजान्महावनस्पतीन्कृतप्रदक्षिणा ववन्दे। विप्रश्निकादेशवचनानि बहु मेने। निमित्तज्ञानुपचचार। शकुनज्ञानविदामादरमदर्शयत्। अनवरतवाच्यमानाः पुण्यकथाः शुश्राव। स्वप्नदर्शनाश्चर्याण्याचार्याणामाचचक्षे। चत्वरेषु शिवबलिमुपजहार।

---

# II

## चन्द्रापीडजन्म

कदाचित्तारापीडो राजा क्षीणभूयिष्ठायां रजन्यामल्पशेष-पाण्डुतारके नभसि स्वप्ने सितप्रासादशिखरस्थिताया विलासवत्या आनने सकलकलापरिपूर्णमण्डलं शशिनं प्रविशन्तमद्राक्षीत् । प्रबुद्ध-श्चोत्थाय हर्षविकासस्फारिततरेण चक्षुषा धवलीकृतवासभवनस्तस्मिन्नेव क्षणे समाहूय शुकनासं तस्मै तं स्वप्नमकथयत् । स तं समुपजातहर्षः प्रत्युवाच— "देव, संपन्नाः सुचिरादस्माकं प्रजानां च मनोरथाः । कतिपयैरेवाहोभिरसंशयमनुभवति स्वामी सुतमुखकमलावलोकनसुखम् । अद्य खलु मयापि निशि स्वप्ने धौतधवलवाससा प्रशान्तमूर्तिना दिव्याकृतिना द्विजेन विकचं मकरन्दबिन्दुशीकरवर्षि पुण्डरीकमेक-मुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम् । आवेदयन्ति हि प्रत्यासन्नमा-नन्दमग्रपातीनि शुभानि निमित्तानि । किं वान्यत्प्रियतरं परमानन्दकारण-मतो भविष्यति ? अवितथफला हि प्रायो निशावसानसमये दृष्टा भवन्ति स्वप्नाः । सर्वथा अचिरेणैव मान्धातारमिव धौरेयं सर्वराजर्षीणां भुवनानन्दहेतुमात्मजं जनयिष्यति देवी । येनेयमविच्छिन्नसंताना क्षितिभारधारणोचिता भविष्यति कुलसंततिः स्वामिनः" इति । एवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्याभ्यन्तरमुभाभ्यामपि ताभ्यां स्वप्नाभ्यां विलासवतीमानन्दयांचकार ।

कतिपयदिवसापगमे च देवताप्रसादात्सरसीमिव प्रतिमाशशि विवेश गर्भो विलासवतीम् , येन नन्दनवनराजिरिव पारिजातेन मधुसूदनवक्षःस्थलीव कौस्तुभमणिना देवी सुतरामराजत; शनै

शनैः प्रतिदिनमुपचीयमानगर्भा परिपीतसागरसलिलभरा मेघमालेव मन्दं मन्दं संचचार ; सालसं च निशश्वास। तथावस्थां तां गर्भच्छविपाण्डुरामालोक्येङ्गितकुशलोऽन्तःपुरिकाजनो विज्ञातवान्।

अथ तस्याः सर्वपरिजनप्रधानभूता सदा राजकुलसंवासचतुरा सर्वमङ्गलकुशला कुलवर्धना नाम महत्तरिका प्रशस्ते दिवसे प्रदोषवेलायामभ्यन्तरास्थानमण्डपगतं मूर्धाभिषिक्तैः प्रधाननरेन्द्रैः परिमितैः परिवृतमनतिदूरावस्थितपरिजनं समुपारूढविस्रम्भनिर्भरास्तास्ताः कथाः शुकनासेन सह कुर्वाणं भूमिपालमुपसृत्य रहः कर्णमूले विलासवतीगर्भवृत्तान्तमावेदयत्।

तेन तु तस्या वचनेनाश्रुतपूर्वेणासंभाव्येनामृतरसेनेव सिक्तसर्वाङ्गस्य राज्ञः शुकनासमुखे लोलतारकमानन्दजलबिन्दुक्लिन्नपक्ष्ममालं तत्क्षणं पपात चक्षुः। तत्कालोचितमपरमतिमहतो हर्षस्य कारणमपश्यन् शुकनासः स्वयमुत्प्रेक्ष्य समुत्सर्पितासनः समासन्नतरमुपसृत्य नातिप्रकाशमावभाषे "देव, किमस्ति किंचित्तस्मिन्स्वप्नदर्शने सत्यम्? अत्यन्तमुत्फुल्ललोचना हि कुलवर्धना दृश्यते। तदावेदयतु देवः। किमिदम्?" इत्युक्तवति तस्मिन् राजा विहस्याब्रवीत् "यदि सत्यमनया यथा कथितं तथा सर्वमवितथं स्वप्नदर्शनम्। अहं तु न श्रद्दधे। कुतोऽस्माकमियती भाग्यसंपत्? अभाजनं हि वयमीदृशानां प्रियवचनश्रवणानाम्। अवितथवादिनामप्यहं जानन् कुलवर्धनामेवंविधानां कल्याणानामसंभाविनमात्मानं मन्यमानो विपरीतामिवाद्य पश्यामि। तदुत्तिष्ठ। स्वयमेव गत्वा किमत्र सत्यमिति देवीं पृष्ट्वा ज्ञास्यामि" इत्यभिधाय विसर्ज्य सकलनरेन्द्रलोकमुन्मुच्य स्वाङ्गेभ्यो भूषणानि कुलवर्धनायै दत्वा सह शुकनासेनोत्थाय हर्षविशेषनिर्भरेण त्वर्यमाणो मनसा दक्षिणेनाक्ष्णा परिस्फुरताभिनन्द्यमानस्तत्कालसेवासमुचितेन विरलविरलेन परिजनेनानुगम्यमानोऽन्तःपुरमयासीत्। तत्र च गोरोचनाचित्रितदशमनुपहतमतिधवलं दुकूलयुगलं वसानां विलासवतीं ददर्श।

ततः क्रमेण पूर्णे प्रसवसमये पुण्येऽहनि प्रशस्तायां वेलायामिरंमदमिव जलधरमाला सकललोकहृदयानन्दकारिणं विलासवती सुतमसूत। अनन्तरं च मन्दरमथ्यमानजलनिधिघोषगम्भीरदुन्दुभिध्वानपुरःसरेण प्रहतमृदुमृदङ्गशङ्खकाहलानेकजनसहस्रकलकलबहुलेन त्रिभुवनमापूरयतोत्सवकोलाहलेन ससामन्ताः सान्तःपुराः सप्रकृतयः सराजलोकाः सबालवृद्धा ननृतुरागोपालमुन्मत्ता इव हर्षनिर्भराः प्रजाः। प्रतिदिनमवर्धत चन्द्रोदयेनेव जलधिः कलकलमुखरो राजसूनोर्जन्ममहोत्सवः।

पार्थिवस्तु तनयाननदर्शनोत्सवहृतहृदयोऽपि दिवसावसाने मौहूर्तिकगणोपदिष्टे प्रशस्ते मुहूर्ते निवारितनिखिलपरिजनः शुकनासद्वितीयोऽनेकवृद्धाङ्गनारब्धसूतिकामङ्गलगीतिकामनोहरम्, उपपाद्यमानस्वस्त्ययनं, क्रियमाणशिशुरक्षाबलिविधानम्, आबध्यमानधवलकुसुमदामशतम्, अविच्छिन्नपठ्यमाननारायणनामसहस्रम्, अमलहाटकयष्टिप्रतिष्ठापितैर्निश्चलशिखैर्मङ्गलप्रदीपैरुद्भासितं, सूतिकागृहमपश्यत्। अम्भः पावकं च स्पृष्ट्वा विवेश। प्रविश्य च प्रसवपरिक्षामपाण्डुमूर्तेरुत्सङ्गगतं विलासवत्याः, अनुपजातकाठिन्यमिव कल्पतरुपल्लवम्, उत्फुल्लमिव रक्तारविन्दराशिम्, उद्भासमानैः सहजभूषणैरिव महापुरुषलक्षणैरुपेतम्, आह्लादहेतुमात्मजं ददर्श। विगतनिमेषनिश्चलपक्ष्मणा दूरविस्फारितेन स्निग्धेन चक्षुषा पिबंस्तनयाननं मुमुदे। कृतकृत्यं चात्मानं मेने। समृद्धमनोरथः शुकनासस्तु शनैः शनैरङ्गप्रत्यङ्गान्यस्य निरूपयन् प्रीतिविस्फारितलोचनो भूमिपालमवादीत्—"देव, पश्य पश्यास्य कुमारस्य गर्भसंपीडनवशादपरिस्फुटावयवशोभस्यापि माहात्म्यमाविर्भावयन्ति चक्रवर्तिचिह्नानि।

तथाहि—एतद्विकचपुण्डरीकधवलं कर्णान्तायतं लोचनयुगलम्; रक्तोत्पलकलिकाकारं चास्याधरपुटकम्; रक्तोत्पलकलिकालो-

हिततलौ शङ्खचक्रचिह्नौ प्रशस्तलेखाञ्चितौ करौ ; अभिनवकल्पतरुपल्लव-कोमलं रेखामयैर्ध्वजरथतुरगातपत्रकमलैरलंकृतं चरणयुगलम् ; एष च दुन्दुभेरिवातिगम्भीरः स्वरयोगोऽस्य रुदतः श्रूयते " इति ।

एवं कथयत्येव तस्मिन्ससंभ्रमापसृतेन राजलोकेन द्वारि स्थितेन दत्तमार्गस्त्वरितगतिरागत्य प्रहर्षोद्गमपुलकिततनुः स्फारीभवल्लोचनो मङ्गलकनामा प्रहृष्टवदनः पुरुषः पादयोः प्रणम्य राजानं व्यजिज्ञपत्— "देव, दिष्ट्या वर्धसे । प्रतिहतास्ते शत्रवः । चिरं जीव । जय च पृथिवीम् । त्वत्प्रसादादत्रभवतः शुकनासस्यापि ज्येष्ठायां ब्राह्मण्यां मनोरमाभिधानायां राम इव रेणुकायां तनयो जातः । श्रुत्वा देवः प्रमाणम्" इति । अथ नृपतिरमृतवृष्टिप्रतिममाकर्ण्य तद्वचनं प्रीतिविस्फारिताक्षः प्रत्यवदत्— "अहो कल्याणपरंपरा । सत्योऽयं जनप्रवादो यद्विपद्विपदं संपत्संपदमनुबध्नातीति । सर्वथा समानसुखदुःखतां दर्शयता विधिनापि भवतेव वयमनुवर्तिताः " इत्यभिधाय प्रीतिविकसितमुखः सरभसमालिङ्ग्य विहसन् स्वयमेव शुकनासस्योत्तरीयं पूर्णपात्रं जहार । तस्मै च प्रीतमनाः प्रियवचनश्रवणानुरूपं पारितोषिकमादिदेश । उत्थाय च शुकनासभवनं गत्वा द्विगुणतरमुत्सवमकारयत् ।

अतिक्रान्ते च षष्ठीजागरे प्राप्ते दशमेऽहनि पुण्ये मुहूर्ते गाः सुवर्णं च कोटिशो ब्राह्मणसात्कृत्वा 'मातुरस्य मया परिपूर्णमण्डलश्चन्द्रः स्वप्ने मुखकमलमाविशन्दृष्टः' इति स्वप्नानुरूपमेव राजा स्वसूनोश्चन्द्रापीड इति नाम चकार । अपरेद्युः शुकनासोऽपि कृत्वा ब्राह्मणोचिताः सकलाः क्रिया राजानुमतमात्मजस्य विप्रजनोचितं वैशम्पायन इति नाम चक्रे । क्रमेण कृतचूडाकरणादिबालक्रियाकलापस्य शैशवमतिचक्राम चन्द्रापीडस्य ।

# III

## चन्द्रापीडस्य यौवनारम्भः

एवं च क्रमेण समारूढयौवनारम्भं परिसमाप्तसकलकलाविज्ञानमधीताशेषविद्यं चावगम्य अनुमोदितमाचार्यैः चन्द्रापीडमानेतुं राजा बलाधिकृतं बलाहकनामानमाहूय बहुतुरगबलपदातिपरिवृतमतिप्रशस्तेऽहनि प्राहिणोत्। स गत्वा विद्यागृहं प्रविश्य शिरसा प्रणम्य सविनयमासने राजपुत्रानुमतो न्यषीदत्। दर्शितविनयश्च व्यजिज्ञपत्— "कुमार, महाराजः समाज्ञापयति। पूर्णा नो मनोरथाः। अधीतानि शास्त्राणि। शिक्षिताः सकलाः कलाः। गतोऽसि सर्वास्वायुधविद्यासु परां प्रतिष्ठाम्। अनुमतोऽसि निर्गमाय विद्यागृहात् सर्वाचार्यैः। अयमत्रभवतो दशमो वत्सरो विद्यागृहमधिवसतः। प्रविष्टोऽसि षष्ठमनुभवन्वर्षम्। एवं संपिण्डितेनामुना षोडशेन प्रवर्धसे। तदद्य प्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्त्वा दर्शनमखिलाभ्यो मातृभ्योऽभिवाद्य च यथासुखमनुभव राज्यसुखानि नवयौवनललितानि च। संमानय राजलोकम्। पूजय द्विजातीन्। परिपालय प्रजाः। आनन्दय बन्धुवर्गम्। अयं च ते त्रिभुवनैकरत्नमनिलगरुडसमजवः इन्द्रायुधनामा तुरंगमः प्रेषितो महाराजेन द्वारि तिष्ठति। एष खलु देवस्य पारसीकाधिपतिना त्रिभुवनाश्चर्यमिति कृत्वा जलधिजलादुत्थितमयोनिजमिदमश्वरत्नमासादितं मया महाराजाधिरोहणयोग्यमिति संदिश्य प्रहितः। तदयमनुगृह्यतामधिरोहणेन" इत्यभिधाय विरतवचसि बलाहके चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा नवजलधरध्वानगम्भीरया गिरा 'प्रवेश्यतामिन्द्रायुधः' इति निर्जिगमिषुरादिदेश।

अथ वचनानन्तरमेव प्रवेशितमतिप्रमाणं रंहःसंघातमिव मूर्तिमन्तमश्वातिशयमिन्द्रायुधमद्राक्षीत्। दृष्ट्वा च तमदृष्टपूर्व-

ममानुषलोकोचिताकारमशेषलक्षणोपपन्नमश्वरूपातिशयमतिधीरप्रकृतेरपि चन्द्रापीडस्य पस्पर्श विस्मयो हृदयम्। आसीच्चास्य मनसि—'असंशयमनेन महात्मना केनापि शापभाजा भवितव्यम्। आवेदयतीव मदन्तःकरणमस्य दिव्यताम्' इति विचिन्तयन्नेवारुरुक्षुरासनात् उदतिष्ठत्। मनसा च तं तुरंगममुपसृत्य "महात्मन् अर्वन्, योऽसि सोऽसि; नमोऽस्तु ते। सर्वथा मर्षणीयोऽयमारोहणातिक्रमोऽस्माकम्" इत्यामन्त्रयांबभूव। विदिताभिप्राय इव स तमिन्द्रायुधस्तिर्यक् चक्षुषा विलोक्य मधुरमतिमनोहरं हेषारवमकरोत्। अथ तमारुरोह चन्द्रापीडः। निर्गतं च तं परिचारार्थमनुप्रेषिताः कुलक्रमागता राजपुत्राः पर्यवारयन्त। दूरावनतैश्च शिरोभिः प्रणेमुः।

चन्द्रापीडस्तु तान् सर्वान् मानयित्वा यथोचितमनन्तरं तुरंगमाधिरूढेनानुगम्यमानो वैशम्पायनेन, पुरः प्रधावता पदातिपरिजनेन जय जीवेति च मधुरवचसा मङ्गलशब्दमनवरतमुच्चैः पठता वन्दिजनेन स्तूयमानो नगराभिमुखः प्रतस्थे।

क्रमेण च तं नगरमार्गमनुप्राप्तमवलोक्य सर्व एव परित्यक्तसकलव्यापारो रजनिकरोदयपरिक्षुभ्यमानकुमुदवनानुकारी जनः समजनि। "अहो वयमतिपुण्यभाजः। यदिमाममानुषीमस्याकृतिं लोचनयुगलेनानिवारिताः पश्यामः। सफला नोऽद्य जाता जन्मवत्ता। सर्वथा नमोऽस्मै रूपान्तरधारिणे भगवते चन्द्रापीडच्छद्मने पुण्डरीकेक्षणाय" इति वदन्विरचितप्रणामाञ्जलिर्नगरलोकः प्रणनाम। क्रमेण स राजद्वारमासाद्य तुरंगमादवततार।

अवतीर्य च करतलेन करे वैशम्पायनमालम्ब्य पुरः सविनयं प्रस्थितेन बलाहकेनोपदिश्यमानमार्गः त्रिभुवनमिव पुञ्जीभूतं राजकुलं विवेश। पदे पदे चाभ्यन्तरविनिर्गताभिराचारकुशलाभिरन्तःपुर-

वृद्धाभिः क्रियमाणावतरणमङ्गलः सप्त कक्षान्तराणि अतिक्रम्य अभ्यन्तरावस्थितं कुलक्रमागतैरुदात्तान्वयैरनुरक्तैः सर्वतः शरीररक्षाधिकारनियुक्तैः पुरुषैः परिवृतं हंसधवलशयनतले निषण्णं पितरमपश्यत्। अतिदूरावनतेन शिरसा कृतप्रणामम् 'एह्येहि' इत्यभिदधानो दूरादेव प्रसारितभुजयुगल आनन्दजलापूर्यमाणलोचनस्तं पिता विनयावनतमालिलिङ्ग। ततः पितुश्चरणपीठसमीपे चन्द्रापीडः क्षितितल एव निषसाद। अनन्तरनिर्हिते चास्यासने राज्ञा सुतनिर्विशेषमुपगूढो वैशम्पायनो न्यषीदत्। ततः "गच्छ वत्स, पुत्रवत्सलां मातरमभिवाद्य दर्शनलालसां दर्शनेन चानन्दय" इति विसर्जितः पित्रा सविनयमुत्थायान्तःपुरमाययौ। तत्र अङ्गनाजनेन परिवृतां मातरमुपसृत्य ननाम। सा तु तं ससंभ्रममुत्थाप्य मूर्धन्युपाघ्राय तं सुचिरमाशिश्लेष; "अहो गुरुजनस्योपरि भक्तिरसाधारणा। सर्वथा यथा पितुः प्रसादात् समस्ताभिरुपेतो विद्याभिरालोकितोऽसि, एवमचिरेणैव कालेनानुरूपाभिः वधूभिरुपेतमालोकयिष्यामि" इत्येवमभिधाय लज्जास्मितावनतं कपोले पर्यचुम्बदेनम्। एवं तत्रापि नातिचिरमेव स्थित्वा निर्गत्य इन्द्रायुधमारुह्य सर्वराजपुत्रलोकेनानुगम्यमानः शुकनासं द्रष्टुमयासीत्।

द्वारदेशेऽवस्थापिततुरंगो वैशम्पायनमवलम्ब्य कक्षान्तराणि निरीक्षमाणो द्वितीयमिव राजकुलं शुकनासभवनं विवेश। तत्र अनेकनरेन्द्रसहस्रमध्योपविष्टमपरमिव पितरमुपदर्शितविनयो दूरावनतेन मौलिना शुकनासं ववन्दे। सोऽपि ससंभ्रममुत्थाय प्रहर्षविस्फारितलोचनः सह वैशम्पायनेन प्रेम्णा गाढं तमालिलिङ्ग। ततः सादरोपनीतमपहाय रत्नासनमवनावेव राजपुत्रः समुपाविशत्। तदनु च वैशम्पायनः। स्थित्वा च तूष्णीं क्षणमिव शुकनासः संप्रहृष्टस्तमब्रवीत्—

"तात चन्द्रापीड, अद्य खलु देवस्य तारापीडस्य समाप्तविद्य-मुपारूढयौवनमालोक्य भवन्तं सुचिरात् भुवनराज्यफलप्राप्तिरुपजाता। अद्य समृद्धाः सर्वा गुरुजनाशिषः। अद्य फलितमनेकजन्मान्तरोपात्त-मवदातं कर्म। अद्य प्रसन्नाः कुलदेवताः। न ह्यपुण्यभाजां भवादृशः त्रिभुवनविस्मयजनकाः पुत्रतां प्रतिपद्यन्ते। क्वेदं वयः। क्वेय-ममानुषी शक्तिः। क्व चेदमशेषविद्याग्रहणसामर्थ्यम्। अहो धन्याः प्रजाः, यासां भरतभगीरथप्रतिमो भवानुत्पन्नः पालयिता। किं खलु कृतमवदातं कर्म वसुंधरया, ययासि भर्ता समासादितः" इत्यभिधाय च स्वयमाभरणकुसुमाङ्गरागादिभिरभ्यर्च्य विसर्जयांचकार।

विसर्जितश्चोत्थाय अन्तःपुरं प्रविश्य दृष्ट्वा वैशम्पायनमातरं मनोरमाभिधानां निर्गत्य समारुह्य इन्द्रायुधं पित्रा पूर्वकल्पितं प्रतिच्छन्दकमिव राजकुलस्य उपपादिताशेषगृहप्रवेशमङ्गलं कुमारो भवनं जगाम। अभ्यन्तरे च स्वशयनीयगृह एव इन्द्रायुधस्या-वस्थानमकल्पयत्।

# IV

## शुकनासोपदेशः

एवं समतिक्रामत्सु केषुचिद्दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहारानुपकरणसंभारसंग्रहार्थमादिदेश । समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छन् शुकनासः सविस्तरमुवाच---

"तात चन्द्रापीड, विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्तिसाध्यमपरमैश्वर्यतिमिरान्धत्वम् । अशिशिरोपचारहार्योऽत्यन्ततीव्रो दर्पदाहज्वरोष्मा, इत्यतो विस्तरेणाभिधीयसे । गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरंपरा । सर्वाविनयानामेकैकमप्येषामायतनम् ; किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । भवादृशा एव भवन्ति भाजनान्युपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः । अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य । गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम् । अग्राम्यं कर्णाभरणम् । अतीतज्योतिरालोकः । विशेषेण तु राज्ञाम् । विरला हि तेषामुपदेष्टारः । उपदिश्यमानमपि ते न शृण्वन्ति । शृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून् । आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । न ह्येवंविधमपरमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या । लब्धापि खलु

दुःखेन परिपाल्यते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। नाचारं पालयति। न सत्यमनुबुध्यते। सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम्। गुणवन्तमपवित्रमिव न स्पृशति। उदारसत्त्वममङ्गलमिव न बहुमन्यते। सुजनमनिमित्तमिव पश्यति। अभिजातमहिमिव लङ्घयति। शूरं कण्टकमिव परिहरति। दातारं दुःस्वप्नमिव न स्मरति। विनीतं पातकिनमिव नोपसर्पति। मनस्विनमुन्मत्तमिवोपहसति। तोयराशिसंभवापि तृष्णां संवर्धयति। एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः। सर्वाविनयाधिष्ठानतां च गच्छन्ति। त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते। न प्रणमन्ति देवताभ्यः। न पूजयन्ति द्विजातीन्। न मानयन्ति मान्यान्। नार्चयन्त्यर्चनीयान्। नाभिवादयन्त्यभिवादनार्हान्। नाभ्युत्तिष्ठन्ति गुरून्। जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम्। आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय। कुप्यन्ति हितवादिने। सर्वथा तमभिनन्दन्ति तमालपन्ति तं पार्श्वे कुर्वन्ति तं संवर्धयन्ति तेन सह सुखमवतिष्ठन्ते तस्मै ददति तं मित्रतामुपनयन्ति तस्य वचनं शृण्वन्ति तत्र वर्षन्ति तं बहुमन्यन्ते तमाप्ततामापादयन्ति योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति।

तदेवंप्रायेऽतिकुटिले राज्यतन्त्रे महामोहकारिणि च यौवने कुमार, तथा प्रयतेथा यथा नोपहस्यसे जनैर्न निन्द्यसे साधुभिर्न धिक्क्रियसे गुरुभिर्नोपालभ्यसे सुहृद्भिर्न शोच्यसे विद्वद्भिः। कामं भवान्प्रकृत्यैव धीरः। पित्रा च महता प्रयत्नेन समारोपितसंस्कारः।

तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि। तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे—विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा पित्रा क्रियमाणमनुभवतु भवान् यौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुंधराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति" इत्येतावदभिधायोपशशाम।

उपशान्तवचसि शुकनासे चन्द्रापीडः ताभिरमलाभिरुपदेशवाग्भिः प्रक्षालित इव, उन्मीलित इव, स्वच्छीकृत इव, निर्मृष्ट इव, अभिषिक्त इव, अभिलिप्त इव, अलंकृत इव, पवित्रीकृत इव, उद्भासित इव प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम।

---

# श्रीकृष्णचरित्रम्

## I

## वसुदेवविवाहः

अत्रान्तरे यदुष्वासीद्देवांशो देवको नामोग्रसेनस्यानुजः । तस्य पुत्री गुणाढ्या नाम्ना देवकी । तां देवको वसुदेवाय प्रादात् । कृतोद्वाहो वसुदेवो नवोढया भार्यया सह रथारूढः स्वगृहं ययौ । कंसस्तदा पितृव्यपुत्र्यां देवक्यां साक्षात्स्वसृनिर्विशेषया प्रीत्या स्वयं सारथ्यमकरोत् । तदा "रे मूढ कंस, अस्याः खल्वष्टमो गर्भस्त्वां हनिष्यति । तत्कुतस्त्वमस्याः सारथ्यं करोषि?" इत्यशरीरा आकाशवाण्युदभूत् । तच्छ्रुत्वा स कंसो भगिनीं हन्तुं खड्गपाणिः कचे जग्राह । तद् दृष्ट्वा वसुदेवो दूयमानमानसोऽपि स्वाकारं प्रच्छाद्य प्रसन्नमुखो भूत्वा "भ्रातः कंस, विरम स्त्रीहत्यायाः । जातस्य खलु मृत्युर्नियतः । न चाशरीरा वागिमां मृत्युमवदत्; किं त्वस्या अष्टमं पुत्रम् । लोके सर्वा अपि स्त्रियः प्रसुवते इति न । काश्चन वन्ध्या एव भवन्ति । प्रसुवानापीयमष्टौ पुत्रान् प्रसोष्यत इति को वेद? इदानीमस्माभिः श्रुता वाक्कस्मात्केनचित्कुत्रचिन्निगूढेन प्रतारकेण पुरुषेणोक्ता न भवेत्? । भवतु, सर्वमप्यभ्युपगच्छामः; तथाप्यस्या अष्टमः खलु पुत्रस्तव मृत्युर्भविता । न प्रथमे सप्त । तस्मादस्यास्तावत्पर्यन्तं जीवने का तव हानिः? एतावतापि तव यद्यसन्तोषस्तर्ह्यस्या उत्पत्स्यमानानष्टावपि पुत्रान् जातान् जातांस्तव समर्पये । तेषु त्वं यथेष्टं समाचर" इत्यवदत् ।

निसर्गतः पापोऽपि स सयुक्तिकं तद्वचो निशम्य लोकापवादाच्च भीतः स्वसुर्वधान्निववृते। वसुदेवोऽपि भार्यया सह स्वगृहं ययौ। ततो व्यतीते कतिपये काले देवकी प्रथमं पुत्रं सुषुवे। यथाप्रतिश्रुतं वसुदेवः प्रसवानुपदं तं कंसायार्पयत्। "अष्टमात्खलु मम मृत्युः, तस्मादयं सुखी जीवतु" इति कंसस्तमुज्झाञ्चकार। अव्यवस्थितचित्तस्य तद्वाक्यं वसुदेवो नाभ्यनन्दत्। ततः कदाचिन्नारदः कंसाय "वसुदेवाद्या विष्णुपक्षीयाः। विष्णुश्च युष्माकं स्वाभाविकः शत्रुः। स च महाकपटी। स एवास्या अष्टमः पुत्रो भूत्वा तव मृत्युर्भविष्यति। प्रथममारभ्याष्टमो वा अन्त्यमारभ्याष्टमो वा तव मृत्युर्भविष्यतीति न विद्मः। तस्मात्तत्र त्वया सावधानेन भाव्यम्" इत्यवोचत्।

तच्छ्रवणानुपदं कंसस्तं देवकीपुत्रमानाय्य जघान। स पुनर्देवकीवसुदेवावपि किमनर्थं विधास्यत इति भिया तावायसशृङ्खलाभिर्निगड्य गृहे स्थापयामास। स्वपितरमुग्रसेनं च निगृह्य स्वयं राजाभूत्। देवकी च प्रतिवत्सरमेकैकं कुमारं प्रासोष्ट। कंसस्तान् सर्वान् प्राहरत्। ततः सप्तमं वारं देवकी गर्भिण्यभवत्। कतिपयेषु मासेषु गतेषु भगवदाज्ञया योगमाया दुर्गा देवक्या जठरादाकृष्य तं गर्भं तत्सपत्न्या रोहिण्या उदरे निवेशयामास। देवक्या गर्भोऽकाले पतित इति जना अवदन्। वसुदेवपितुः शूरस्य गोपालिकायां दास्यां जातः पुत्रो नन्दनामा गोपराजो बृहद्वने आस। तस्य बहु गोधनमासीत्। तद्वशे बहवो गोपा आसन्। स तेभ्यो वार्षिकं करं संगृह्य तत्षष्ठांशं राज्ञे ददाति। यदा देवक्याः सपत्न्यो गर्भिण्यो भवन्ति तदा कंसस्ता वसुदेवपत्नीः देवकीगर्भाणां विनिश्चयार्थमाप्रसवं स्थानान्तरे वासयति। तथैव तदात्व आपन्नसत्त्वां रोहिणीमपि नन्दगृहे स्थापयामास। तत्रैव सा बलाढ्यं बलरामं नाम सुतमसूत।

---

## II

## । श्रीकृष्णावतारः ।

पुनर्देवक्यष्टमं गर्भमधारयत् । तस्मिन् गर्भे भगवान्नारायणो जगद्रक्षार्थं प्राविशत् । श्रावणे मासि कृष्णपक्षेऽष्टम्यां रोहिणीनक्षत्र-युक्तायामर्धरात्रसमये श्रीकृष्णो देवक्या जठरादुदयाद्रेश्चन्द्र इव विभुराविरभूत् । तदा

तमद्भुतं बालकमम्बुजेक्षणं
चतुर्भुजं शङ्खगदाद्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं
पीताम्बरं सान्द्रपयोदसन्निभम् ॥ ४९ ॥

महार्हवैडूर्यकिरीटकुण्डल-
त्विषा परिष्वक्तसहस्रकुन्तलम् ।
उद्दामकाञ्च्यङ्गदकङ्कणादिभि-
र्विरोचमानं वसुदेव ऐक्षत ॥ ५० ॥

शिशोरेतादृशममानुषं रूपं वीक्ष्य कंसाद्भीतो वसुदेवस्तं नारायण-मवतीर्णं ज्ञात्वा "स्वामिन्, इदमद्भुतं रूपमुपसंहर" इति प्रार्थयांचक्रे । श्रीकृष्णोऽपि "पितः, इदानीमेव गोकुले नन्दस्य पत्नी यशोदा दारिकां प्रासूत । मां तत्र नीत्वा स्थापयित्वा तामत्रानाय निवेहि" इत्युक्त्वा स्वस्य वैष्णवं रूपमन्तर्धाप्य प्राकृतः शिशुरभवत् । सुतं समादाय बहिर्निर्गतस्य वसुदेवस्य पादाभ्यां निगडः स्वयं व्यगलत् । पिहितानि कवाटानि च स्वयमुद्घाटितानि । तदा मन्दं जलधरो ववर्ष । आदिशेषः फणाभिर्वर्षधारा न्यवारयत् । मथुरा-गोकुलयोर्मध्ये तिर्यक्प्रवहन्ती अगाधतोया नक्राकुला आवर्तभीषणा

यमुना श्रीकृष्णोद्वहे वसुदेवाय समुद्रः श्रीरामायेव मार्गमदात्। तयैकपद्या शौरिर्नन्दव्रजे यशोदायाः सूतिकागृहं गत्वा तत्रैनं पोतं निक्षिप्य तत्सुतामुपादाय यथागतमागत्य देवकीशयने तां न्यस्य शिश्ये। बहिरन्तःपुरस्य च द्वाराणि पूर्ववदर्गलितानि। शृङ्खला च तत्पादावावृणोत्। तत्रत्या गृहरक्षिणस्तावत्पर्यन्तं दुर्गाया मायया मोहिताः पीतमद्या इव प्रज्ञाहीना आसन्। तथैव गोकुलेऽपि जना यशोदायाः प्रसूतिं केवलं जज्ञुः। जातस्य शिशोर्लिङ्गं वसुदेवस्यागमनं शिशुविनिमयं च नाज्ञासिषुः।

देवक्याः शयनगृहे शिशोः रोदनध्वनिं श्रुत्वा तद्गृहरक्षिणः कंसाय प्रसवमावेदयामासुः। स तल्पात् समुत्थाय सूतिकागृहमगच्छत्। तं दृष्ट्वा "पश्य भ्रातस्तव स्नुषेयं जाता। मुहुर्मृतपुत्रायै मह्यमिमां दारिकां वाऽन्ततो देहि। न हि लोकेऽबलाभ्यो योषिद्भ्यस्त्वादृशानां शूराणां भयं संभाव्यते" इति शिशुमालिङ्ग्य प्रलपन्त्या देवक्या हस्तात् शिशुमाच्छिद्य स पापः शिलापृष्ठे समपोथयत्।

भगवती सा दुर्गा तद्धस्तात् खमुत्पुप्लुवे। अष्टभिर्भुजैरष्टायुधानि बिभ्राणां देवैः स्तूयमानां तामम्बां दृष्ट्वा स खलोऽप्यबिभेत्। "हे मन्द पापिन्, नाहं तव मृत्युः; त्वां हन्ता विष्णुर्यत्र कुत्र वा जातः" इत्युक्त्वान्याविदितं देवकीसविधमेवागमत्। सा तत्र एकानङ्गा इति नाम्ना प्रसिद्धासीत्।

---

# III

## । कंसदुर्वृत्तम् ।

कंस इमं वृत्तान्तं स्वसहायेभ्यो दुर्मन्त्रिभ्योऽकथयत् । ते तमब्रुवन्— "राजन्, विष्णुरुत्पन्न इति शिशुनोक्तं सत्यमेव भवेत् । तस्मादनिर्दशाहा निर्दशाहाश्च शिशवोऽन्विष्यान्विष्य हन्तव्याः । अपि च, विष्णोः सहाया देवाः; ते चास्माकं सहजाः शत्रवः । यज्ञादिभिस्तेषां बलप्रदा विप्राः । पयआज्यादिदानेन होमसाधनानि गावः । तस्माद्गवां विप्राणां च हनने कृते देवाः क्षीणबला भवेयुः । छिन्नेषु सहायेषु कृत्तमूलो वनस्पतिरिव विष्णुः स्वयमेव शुष्येत् । बालानां हननेनेदानीं समुत्पन्नो विष्णुश्च म्रियेत । तस्मादधो निर्दिष्टानां बालादीनां समूल-घातायास्मानादिश" इति । कालपाशवशं गतः कंसस्तेषां दुर्मन्त्रितं हितं मत्वा तथाऽस्त्वित्यवदत् ।

परहिंसया विहरणशीला दानवा इच्छामात्रप्राप्तानि रूपाणि गृहीत्वा बह्वीभिर्विधाभिस्तान् हिंसितुमारेभिरे ।

———

# IV

## । श्रीकृष्णकथारम्भः ।

नन्दो यशोदा च वसुदेवनिक्षिप्तं तं शिशुमात्मजं मत्वा स्वस्तिवाचनं ब्राह्मणैः कारयित्वा जातकर्मादीन् संस्कारान् कारयामासतुः। तत्पूर्वमेव जातो रौहिणेयस्तत्रैव ववृधे । मासत्रयव्यवधानौ बलरामकृष्णौ नन्दः समप्रेम्णाऽपोषयत् । कदाचिन्नन्दः कंसाय वार्षिकं करं दातुं मथुरामगच्छत् । वसुदेवो भ्रातरमागतं श्रुत्वा तं द्रष्टुमगच्छत् । नन्दो वसुदेवं प्रीत्या पर्यष्वजत । "अहो भ्रातः, प्रजाशाया निवृत्तस्य प्रवयसस्तव पुत्रः संजात इति श्रुत्वाऽहं मोदे । तत्तव प्राग्भवीयपुण्यफलमेव" इति वसुदेवो नन्दमवदत् । नन्दोऽब्रवीत्—"तव देवक्यां जाताः षट् पुत्रा अपि पापेन कंसेन पोथिताः । सप्तमो गर्भस्तु स्रुतः । अष्टमी च दारिकाऽभूत्। सा च दिवमुदपतदित्यहमश्रौषम् । सर्वमपीश्वरकृत्यम् । तदपरिहरणीयमिति समाधेयम्" इति । वसुदेवोऽगदत्—"भ्रातर्नन्द, राज्ञे करस्त्वया दत्तः; अहं च दृष्टः । अत्र कर्तव्यं चेतःपरं किमपि तव नास्ति । पश्य तत्र तत्रोत्पाता दृश्यन्ते । कंसप्रेरिताः पापा बालानां हननाय सर्वत्र संचरन्ति । त्वरितं गोकुलं गत्वा शिशू सावधानो रक्ष" इति । तच्छ्रुत्वा नन्दोऽपि प्रतस्थे ।

---

## V

## । पूतनासंहारः ।

कंसस्य दूती पूतना नाम घोरा राक्षस्यासीत् । तेन प्रेरिता सा स्वस्या भयानकं रूपं गोपायित्वा शुभं रूपं स्वीकृत्य अचिरप्रसूतस्य शिशोर्दर्शनव्याजेनार्भकस्य प्रेङ्खासमीपमगात् । मातरि पश्यन्त्यां शिशुमादाय शिरस्याघ्राय स्वाङ्के धृत्वा धापयितुमारभत । तस्या मायामयेन रूपेण मोहिता नन्दपत्नी का त्वमिति तामपृष्ट्वा शिशुं तदधीनं कृत्वा गृहकार्याणि कर्तुमगमत् । सा पूतना स्वस्तनयोः पूरितं विषमयं क्षीरं शिशुमपाययत् । यस्य प्रभावेण विषस्य मारकत्वशक्तिः, मणिमन्त्रौषधादीनां विषपरिहारकत्वशक्तिश्चोद्भूतादृशं महाविष्णुमेतद्विषं कथमुपद्रवेत् ? न कमपि विकारं प्रापयत् । स डिम्भः स्तन्येन सह तस्या असूनपि पपौ । सा निशाचरी चरणौ भुजौ च प्रसार्य भयानकेन रूपेण भूमौ व्यसुः पपात । तं कुणपं वीक्ष्य तत्रत्याः सर्वेऽपि तत्रसुः । यशोदारोहिण्यौ तत्रागत्य बालमन्यत्र यापयित्वा गोमूत्रेण स्नपयांचक्रतुः । व्रजौकसस्तस्याः शरीरं निरहरन् । अत्रान्तरे मथुराया आगच्छन्नन्द इममुदन्तं मध्येमार्गं श्रुत्वा वसुदेवोक्तं स्मृत्वा तं त्रिकालज्ञमृषिं मेने । त्वरितं गृहमागत्य पूतनारिं नीरोगं पुत्रं दृष्ट्वा सर्वं नारायणानुग्रहाज्जातं मेने ।

---

## VI

## । शकटासुरवधः ।

एवंस्थिते गोविन्दस्य चतुर्थो मासः प्रादुरभवत्। शिशोर्जन्मर्क्षेण युक्ते कस्मिंश्चिदहनि निष्क्रमणाख्यं संस्कारं नन्दश्चकार। तस्मिन्प्रातरनडुद्युक्तान्यनांस्यारुह्य तद्ग्रामसीमाया बहिः कंचन देवालयं नन्दः स्वजनैः सह ययौ। यशोदा शिशोर्मङ्गलस्नानमकारयत्। नन्दो ब्राह्मणैः पुण्याहं वाचयामास। मङ्गलतूर्याण्यवादयन्। द्विजेभ्यो दक्षिणां नन्दगोपोऽदात्। भोजनवेलायां शकटस्याधस्ताच्छीतलायां छायायां बालं शाययित्वा ततोऽपि किंचिदधिकवयसोऽन्यान्बालांस्तद्रक्षणाय नियुज्य यशोदा ब्राह्मणेभ्यो बान्धवेभ्यश्च पर्यवेवेष्ट्। तदा कंसस्य भृत्यः कश्चन शिशून् निघ्नन् परिभ्रमन्नास। स एनं शिशुं हन्तुं शकटस्य चक्रं प्राविक्षत्। अत एव तस्य शकटासुर इति नाम। शिशुभावेऽप्यविलुप्तसार्वज्ञ्योऽयं बालश्चक्रस्यान्तः प्रविष्टमसुरं ज्ञात्वा तं हन्तुं बुभुक्षितः स्तन्यार्थं रोरूयमाण इव चरणावुदक्षिपत्। प्रवालादप्यतिमृदुना चरणेन ताडिते चक्रे शकटोऽधरोत्तरोऽभवत्। तस्मिन् न्यस्ताः पदार्था अर्भकस्योपरि पेतुः। विद्विषां वज्रादपि कठोरेण शिशुपादेन ताडितश्चक्रान्तःस्थितोऽसुरः पञ्चत्वं गतः।

तद्रक्षणार्थं निरूपिता बाला भीत्वा पलाय्य यशोदां प्राप्य "शकटोऽधरोत्तरं परिवृत्तः। तस्मिन्निक्षिप्तानि वस्तूनि शिशोरुपरि परिपतितानि। शिशुर्जीवति वा नवेति न विद्मः" इत्यवदन्। नन्दादयः ससाध्वसास्तत्र गत्वा कृष्णं बहिराकृष्य "इदानीं वायुरुद्धतं न वाति, कथमकारणे शकटः परिवृत्तः?" इत्यालोचयन्। "रुदन्नयं पादावुदक्षिपत्, तेनायं शकटोऽपतत्" इति ब्रुवतां बालानां वाक्यं न ते श्रद्दधिरे। अदूरतः पतितं करालमसुरशवं वीक्ष्य तेऽब्रुवन् "कश्चन बालमारको ग्रहोऽत्रागतः स्यात्; स पापः स्वपापेनैव हतः। बालस्तु मन्त्रविदां ब्राह्मणानामाशीर्वादबलेनेश्वरकृपया च रक्षितः" इति।

---

## VII

## तृणावर्तवधः।

कदाचिच्छिशुमङ्कमारोप्य पाययन्ती यशोदा शिशोर्भारं वोढुमक्षमा तमध उत्सृज्य गृहस्यान्तरगच्छत् । अनन्तकोटिब्रह्माण्डान्युदरे धृतवतो बालकस्य वहनं तदसंमत्यां केन वा शक्यम्? पूर्वमन्यत्रानेकान् शिशून्हतवान्कंसभृत्योऽन्योऽसुर एनमपि जिघांसन् परिभ्रमंश्चक्रवातरूपेण तत्रागत्य तत्रत्यानि तृणान्यावर्तयामास । अत एव तस्य तृणावर्त इति नाम । तेनोत्क्षिप्तै रेणुभिर्जनानां चक्षूंषि पूर्णानि। तत्र न कोऽपि स्वात्मानमन्यं वा अद्राक्षीत् । तदा सोऽसुरस्तृणावर्तस्तं शिशुमन्तरिक्षं नीत्वा ततोऽधस्तात्पातयित्वा हन्तुमनास्तमुदुह्याडयत । किंचिदूर्ध्वगमनानन्तरं तस्य भूरिणा भारेण पीडितः सः 'किमहं गिरिशिखरं मोहाच्छिशुं मत्वोच्छ्रितवान्?' इति मत्वा तत एव तमधः पातयितुमयतत । स शिशुस्तं कण्ठे गृहीत्वा दृढमालिङ्ग्य स्वयं तमुद्वहत् । 'अहं किं शिशुमुद्वहामि? स एव वा मामुद्वहति?' इति स संदिदिहे। बालेन गले गृहीतो निश्चेष्टो दैत्योऽन्तरिक्ष आर्तरावं रुराव। नन्दादयस्तं शब्दं श्रुत्वा किमेतत्स्यादित्यूर्ध्वमवालोकयन् । तदा स दैत्यो बालेन निष्पिष्टगलो रक्तं वमन् व्यसुर्भूमौ पपात । अधः पतितं राक्षसं तस्योपरि क्रीडन्तं बालकं च सर्वेऽद्राक्षुः । नन्दस्तं पुत्रं हस्ते गृहीत्वा सर्वमीश्वरानुग्रहमूलं मेने ।

ततो वसुदेवेन प्रेषितो गर्गाचार्यो गोकुलं गत्वा रोहिणीपुत्रस्य बलराम इति यशोदातनयस्य कृष्ण इति च नामनी कृत्वा "कृष्णं नारायणं मन्यस्व" इति नन्दं रहसि जगाद । ततो रामकृष्णौ रिङ्गणं विहाय चङ्क्रमितुमारब्धौ। ततः कतिपयकालानन्तरं तौ पद्भ्यां संचरितुमुपचक्रमाते ।

---

# VIII

## । श्रीकृष्णदौष्ट्यम् ।

तौ भ्रातरावन्यासां गोपीनां गृहं प्रविश्य नानाविधानि दौष्ट्यानि कर्तुमारभाते । कृष्णः कस्याश्चिद्गोप्या गृहं प्रविश्यासमये वत्सानुन्मुच्य धापयति । कस्याश्चिद्गेहे स्वादु दधि पयो नवनीतं च चोरयित्वात्ति, सवयोभ्यश्च ददाति । ततोऽप्यवशिष्टानि बिडालेभ्यो विभजति । अन्तर्गृहेऽन्धकारे निक्षिप्तमपि वस्तु स्वनूपुरमणिगणप्रकाशेन पश्यति । अप्राप्तेषु दध्यादिषु वस्तुषु गोपीषु क्रुधा स्वपतो बालकानुद्बोध्य क्रोशयित्वा व्रजति । दधिक्षीरभाण्डेषु शिक्ये निक्षिप्तेषु भाण्डे रन्ध्रं कृत्वा पिबति । एवंविधानि कृष्णदुर्वृत्तानि गोप्यः पृथक्पृथक् गोपराज्ञ्यै यशोदायै न्यवेदयन् । पुत्रदौष्ट्यं जानत्यपि सा पुत्रवात्सल्यात् "मत्पुत्रस्तादृशान्यकृत्यानि कदापि न कुर्यात् । अतो युष्मदीय वचनं न प्रत्येमि" इत्यवदत् । ततोऽन्यस्मिन्दिने बहूनि रूपाणि गृहीत्वा कृष्णोऽनेकासां गृहाण्येकदैव प्रविश्य गव्यं व्यलुण्टत् । तास्तं हस्ते गृहीत्वा पाशैर्बद्ध्वा यशोदायै निवेदयितुं तद्गृहमागच्छन्त्यो दूरादेव गृहद्वारे स्थितां यशोदां तया लाल्यमानां तद्दत्तं मधुराखाद्यं खादन्तं श्रीकृष्णं च दृष्ट्वा विस्मिताः । स्वाभिर्गृहीतं पाशबद्धं बालं यदा पश्यन्ति तदा स तत्र नासीत् । रिक्ताः पाशाः केवलं तासां हस्ते उर्वरिताः । किं करणीयमित्यालोच्य ताः "भवतु पुनर्गोप्यै कथयामः" इति निर्धार्य तां गत्वा यथावृत्तं कथयामासुः । यशोदाब्रवीत् "महाभागाः, यूयं विवेकिन्यः । अत्रैवेमं दृष्टवत्यश्च । एवं स्थिते कथमयं युष्मद्गृहेऽपि स्थित्वा दौष्ट्यं कुर्यात्? अपि च, यूयं ब्रूथ "एकस्मिन्नेव समये सोऽनेकानि वेश्मानि प्रविश्य गव्यं व्यलुण्टत्"

# VIII

## । श्रीकृष्णदौष्ट्यम् ।

तौ भ्रातरावन्यासां गोपीनां गृहं प्रविश्य नानाविधानि दौष्ट्यानि कर्तुमारेभाते । कृष्णः कस्याश्चिद्गोप्या गृहं प्रविश्यासमये वत्सानुन्मुच्य धापयति । कस्याश्चिद्गेहे स्वादु दधि पयो नवनीतं च चोरयित्वात्ति, सवयोभ्यश्च ददाति । ततोऽप्यवशिष्टानि बिडालेभ्यो विभजति । अन्तर्गृहेऽन्धकारे निक्षिप्तमपि वस्तु स्वनूपुरमणिगणप्रकाशेन पश्यति । अप्राप्तेषु दध्यादिषु वस्तुषु गोपीषु क्रुधा स्वपतो बालकानुद्बोध्य क्रोशयित्वा व्रजति । दधिक्षीरभाण्डेषु शिक्ये निक्षिप्तेषु भाण्डे रन्ध्रं कृत्वा पिबति । एवंविधानि कृष्णदुर्वृत्तानि गोप्यः पृथक्पृथक् गोपराज्ञ्यै यशोदायै न्यवेदयन् । पुत्रदौष्ट्यं जानत्यपि सा पुत्रवात्सल्यात् "मत्पुत्रस्तादृशान्यकृत्यानि कदापि न कुर्यात् । अतो युष्मदीय वचनं न प्रत्येमि" इत्यवदत् । ततोऽन्यस्मिन्दिने बहूनि रूपाणि गृहीत्वा कृष्णोऽनेकासां गृहाण्येकदैव प्रविश्य गव्यं व्यलुण्टत् । तास्तं हस्ते गृहीत्वा पाशैर्बद्ध्वा यशोदायै निवेदयितुं तद्गृहमागच्छन्त्यो दूरादेव गृहद्वारे स्थितां यशोदां तया लाल्यमानां तद्दत्तं मधुराखाद्यं खादन्तं श्रीकृष्णं च दृष्ट्वा विस्मिताः । स्वाभिर्गृहीतं पाशबद्धं बालं यदा पश्यन्ति तदा स तत्र नासीत् । रिक्ताः पाशाः केवलं तासां हस्ते उर्वरिताः । किं करणीयमित्यालोच्य ताः "भवतु पुनर्गोप्यै कथयामः" इति निर्धार्य तां गत्वा यथावृत्तं कथयामासुः । यशोदाब्रवीत् "महाभागाः, यूयं विवेकिन्यः । अत्रैवेमं दृष्टवत्यश्च । एवं स्थिते कथमयं युष्मद्गृहेऽपि स्थित्वा दौष्ट्यं कुर्यात्? अपि च, यूयं ब्रूथ "एकस्मिन्नेव समये सोऽनेकानि वेश्मानि प्रविश्य गव्यं व्यलुण्टत्"

# VIII

## । श्रीकृष्णदौष्ट्यम् ।

तौ भ्रातरावन्यासां गोपीनां गृहं प्रविश्य नानाविधानि दौष्ट्यानि कर्तुमारेभाते । कृष्णः कस्याश्चिद्गोप्या गृहं प्रविश्यासमये वत्सानुन्मुच्य धापयति । कस्याश्चिद्गेहे स्वादु दधि पयो नवनीतं च चोरयित्वात्ति, सवयोभ्यश्च ददाति । ततोऽप्यवशिष्टानि बिडालेभ्यो विभजति । अन्तर्गृहेऽन्धकारे निक्षिप्तमपि वस्तु स्वनूपुरमणिगणप्रकाशेन पश्यति । अप्राप्तेषु दध्यादिषु वस्तुषु गोपीषु क्रुधा स्वपतो बालकानुद्बोध्य क्रोशयित्वा व्रजति । दधिक्षीरभाण्डेषु शिक्ये निक्षिप्तेषु भाण्डे रन्ध्रं कृत्वा पिबति । एवंविधानि कृष्णदुर्वृत्तानि गोप्यः पृथक्पृथक् गोपराज्ञ्यै यशोदायै न्यवेदयन् । पुत्रदौष्ट्यं जानत्यपि सा पुत्रवात्सल्यात् "मत्पुत्रस्तादृशान्यकृत्यानि कदापि न कुर्यात् । अतो युष्मदीय वचनं न प्रत्येमि" इत्यवदत् । ततोऽन्यस्मिन्दिने बहूनि रूपाणि गृहीत्वा कृष्णोऽनेकासां गृहाण्येकदैव प्रविश्य गव्यं व्यलुण्टत् । तास्तं हस्ते गृहीत्वा पाशैर्बद्ध्वा यशोदायै निवेदयितुं तद्गृहमागच्छन्त्यो दूरादेव गृहद्वारे स्थितां यशोदां तया लाल्यमानां तद्दत्तं मधुराखाद्यं खादन्तं श्रीकृष्णं च दृष्ट्वा विस्मिताः । स्वाभिर्गृहीतं पाशबद्धं बालं यदा पश्यन्ति तदा स तत्र नासीत् । रिक्ताः पाशाः केवलं तासां हस्ते उर्वरिताः । किं करणीयमित्यालोच्य ताः "भवतु पुनर्गोप्यै कथयामः" इति निर्धार्य तां गत्वा यथावृत्तं कथयामासुः । यशोदाब्रवीत् "महाभागाः, यूयं विवेकिन्यः । अत्रैवेमं दृष्टवत्यश्च । एवं स्थिते कथमयं युष्मद्गृहेऽपि स्थित्वा दौष्ट्यं कुर्यात्? अपि च, यूयं ब्रूथ "एकस्मिन्नेव समये सोऽनेकानि वेश्मानि प्रविश्य गव्यं व्यलुण्टत्"

इति। कथं शक्यं तेनैकेनैकदैव बहूनि गृहाणि प्रविश्य दुर्वृत्तं कर्तुम्? इतः परमेतादृशान्यसंभावितान्यसत्यानि मा कथयत'' इति। लज्जितास्ताः स्वगृहाण्येव प्रतिन्यवर्तन्त।

---

# IX

## । विश्वरूपप्रदर्शनम् ।

कदाचित्कृष्णे रामेण गोपालबालैश्च सह क्रीडति सति "कृष्णो मृदं भक्षितवान्" इति गोपबाला बलरामश्च धावन्त आगत्य यशोदाया अकथयन्। यशोदा तं करे गृहीत्वा "रे अदान्त, मृदं मा भक्षय; सा चेद्भक्षिता तवोदरे गोला आपनेदिति त्वं पूर्वं मया बहुवारमुक्तः। तथापि कथमिदानीमभक्षयः? एते सर्वेऽपि बालकाः कथयन्ति; तथा तव ज्येष्ठोऽपि कथयति; तत्सत्यमेव भवेत्। गच्छत्विदानीम्; इतः परं भक्षयसि चेन्निम्बपत्राणि पिष्ट्वा तिक्तं तद्रसं त्वां पाययेयम्" इति भर्त्सयामास। "अम्ब, नाहं मृत्तिकां भक्षितवान्। सर्वे बालका मिथ्यावादिनः। अग्रजोऽपि तथैव। लोकेऽहमेक एव सत्यवादी। यदि त्वं संशेषे मुखं व्याददामि; समक्ष पश्य" इति कृष्णोऽब्रवीत्। यद्येवं तर्हि व्यादेह्यास्यमिति मातोवाच। कृष्णेन व्यात्ते आस्ये ब्रह्माण्डं सप्त वारिधीन् सप्त कुलपर्वतान् ज्योतिश्चक्रमाकाशं भूमिं स्वावासभूतं गोकुलं, सरामं सवयोभिः सहितं कृष्णं, करे आत्तयष्टिं पीताम्बरं वसानां लोलकुण्डलां स्वां चाद्राक्षीत्। 'अहो! किमेतदद्भुतम्? किमेष मम स्वप्नः? उत मे बुद्धिमोहः? अथवा मत्पुत्रस्यैवौत्पत्तिक आत्मयोगः?' इति वितर्क्य गर्गाचार्यस्य वचनानुसारेणायमसंशयं नारायण एव भवेदिति निश्चिकाय।

# X

## । श्रीकृष्णस्य दामोदरनामप्राप्तिः ।

एकदा प्रातः क्षुधितो माधवो दधि मथ्नतीं जननीं प्राप्य मन्थानं गृहीत्वा मथनं निषिध्य स्तन्यं दधौ । तदा चुल्ल्यामधिश्रितं पय उत्सिषिचे । तद्दृष्ट्वा पीत्वा अतृप्तं कृष्णं स्वाङ्कादध उत्सृज्य यशोदा तस्यापश्रयणायागच्छत् । गतायां मातरि क्रुद्धः कृष्णो दधिभाजनमश्मना भित्त्वा नवनीतं जग्ध्वा रुदन्नतिष्ठत् । गोपी शृतं पयश्चुल्ल्या उत्तार्य दधिनिर्मथनस्थलमागत्य भग्नं दधिपात्रं मृषाश्रुलोचनं तनयं च निरीक्ष्य कोपात्तं ताडयितुं हस्ते यष्टिं जग्राह । तां वीक्ष्य कृष्णो भीतवदपससार । योगिनां मनोऽपि हृद्येव निकटेऽवस्थितं यं ग्रहीतुं न शक्नोति, तादृशं बालं पलायमानं धर्तुं कथंकारमबला शक्ता स्यात् ? बहुदूरमनुधावनेन श्रान्तायास्तस्या हस्तं कृष्णः स्वयमेव कृपया प्राप । तं गृहीत्वा गृहमानीयोलूखले बन्द्धुं दाम जग्राह । तद्द्व्यङ्गुलोनमभूत् । तेन सहान्यद्दाम संधाय बबन्ध । तदपि द्व्यङ्गुलोनमभूत् । एवं बहूनि दामानि संधाय बद्धेऽपि श्रीकृष्णे तस्य मायया तदपि द्व्यङ्गुलेनैवोनमभूत् । मातुः परिश्रमं वीक्ष्य भक्तवश्यो भगवान्कृपयैव बन्धने ममौ । तत आरभ्य तस्य दामोदर इति नामाजनि । तमुलूखले बद्ध्वोत्सृज्यैकाकिनं जननी दासीभिर्गृहकर्म कारयितुमन्तर्जगाम । बद्धोलूखलः स बालः शनैर्गृहाद्बहिर्निष्क्रम्य किंचिद्दूरं गतः ।

